॥ ओ३म् ॥

गुरुकुलग्रन्थावली ।

# * आख्यातिकः *

हरिद्वारनिकटवर्ति भागीरथीतटविराजित-
गुरुकुल विश्वविद्यालय-मुख्याधिष्ठातृ-
महोदयनिदेशेन गुरुकुलस्थैः श्री-
पं० कन्हैयालाल शास्त्रि-
प्रमुखैः
पण्डितैः संकलितः ।

तैरेवोपयुक्तस्थलटिप्पणीदानेन
विभूषितः, संशोधितश्च ।

गुरुकुलयन्त्रालये श्री गङ्गारामसुद्रकेण
श्री जीतसिंहप्रकाशकेन च
मुद्रितः

सं० १९८६ वि०

द्वितीयवारम् १००० } अस्य पुनर्मुद्रणाद्यधिकारः स्वायत्तः ॥ { मूल्यम् ।)

* ओ३म् *

# भूमिका ।

जोपमद्य प्रकाश्यतेऽयमाख्यातिकनामा ग्रन्थः । इमं हरिद्वार-निकटवर्त्ति-गुरुकुलमुख्याधिष्ठातृभिर्नियुक्ताः कतिचन विद्वांसः सङ्कलयाञ्चक्रुः । तिङन्ता-परपर्यायमाख्यातमिति । तस्य व्याख्यानो ग्रन्थः "आख्यातिकः" इत्युच्यते । वेदाङ्गस्य पाणिनीयव्याकरणस्य चत्वारि शृङ्गाणि-चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्चेत्याद्युक्तं पस्पशान्हिके । तत्र नामपदाभिधेयसुबन्तविज्ञानं कृदन्तत्वादिना प्रातिपदिकत्वज्ञानेन सम्पद्यते । तिङन्तशब्दरूपाणां तत्त्वेन ज्ञानन्तु "आख्यातिक" पठनमन्तरा न साधुतया सम्भवतीति ज्ञायतएव विज्ञैः । परमार्थतस्त्वस्य बहु[1]त्र सुबन्ततिङन्तेषूपयोगः । यतो धातुमूलिकैव शब्दशास्त्र-प्रवृत्तिः, नहि कृदन्तत्वादिज्ञानमपि धातुविज्ञानमपहायेति । अतएव "धात्वर्थं समुपादिष्ट"मिति नन्दिकेश्वरकृतकाशिकाश्लोकपादव्याख्यानावसरे "धात्वर्थ"मिति प्रतीकमुपादाय धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थमित्याहुर्नागेशभट्टाः ।

श्री १०८ मद्दयानन्दसरस्वतीस्वामिभिः पृथगाकारेणाऽऽर्य-भाषासंकलिततयाऽऽख्यातिकग्रन्थो व्यरचि । तस्य, माधवाचार्य्यकृत"धातुवृत्ति" ग्रन्थस्य-चाऽऽकारेण बृहत्तया, भाषासम्वलितत्व, विस्तृतत्वादिदोषेण च गुरुकुलस्थ-छात्रादीनामावृत्तावनुपयोगितयोपयुक्तटिप्पणिदानादिपुरस्सरं पार्थक्येनैव मुद्रापितोऽयमुक्तपण्डितैः । सन्नन्तादिप्रक्रियानिवेशश्चाष्टाध्याय्यां कृतश्रमाणामनावश्यकप्राय इति न कृतः । यथामति संशोधितेऽप्येतस्मिन् मद्दृष्टिदोषात्सीसकाक्षरयोजकादिदोषाद्वाऽऽपतिता अशुद्धीः 'गच्छतस्खलनं क्वापी' तिन्यायेन क्षाम्यन्तु सुजना इति निवेदयति—

विद्वदनुचरः—

संशोधकः ।

(१) अव्युत्पन्नान्यपि प्रातिपदिकानीति वैयाकरणसिद्धान्तात् "सर्वत्रेति" नोक्तम् ।

ओ३म्

# आख्यातिकः ।

तत्रादौ दशलकाराः प्रदर्श्यन्ते ।

(१) भूसत्तायाम्

भूवादयो धातवः ॥ १ । ३ । १ ॥

भू इत्येवमादयः शब्दाः क्रियावचना धातुसंज्ञा भवन्ति ।

धातोः ॥ ३ । १ । ९१ ॥

धातोरित्ययमधिकारो वेदितव्यः ।

आतृतीयाध्यायपरिसमाप्ते र्यदित ऊर्ध्व मनुक्रमिष्यामो धातोरित्येव तद्व वेदितव्यम् ।

(२) वर्त्तमाने लट् ॥ ३ । २ । १२३ ॥

आरब्धोऽपरिसमाप्तश्च वर्त्तमानः, तस्मिन् वर्त्तमानेऽर्थेधातो र्लट्प्रत्ययो भवति ।

---

[ १ ] आत्मधारणानुकूलो व्यापारस्सत्ता ।

[ २ ] वर्तमानकालक्रियावृत्तेरित्यर्थः । वर्त्तमानत्वं प्रारब्धापरिसमाप्तक्रियाश्रयत्वं कालगतं बोध्यम् ।

## (१) लः कर्म्मणि च भावे चाकर्मकेभ्यः ॥ ३ । ४ । ६९ ॥

लइत्युत्सृष्टानुबन्धं सामान्यं गृह्यते । प्रथमाबहुवचनञ्चैतत् । लकाराः कर्मणि कारके भवन्ति । चकारात् कर्तरि च । अकर्मकेभ्यो धातुभ्यो भावे भवन्ति । पुनश्चकारात् कर्तरि च । अटावितौ । उच्चारणसामर्थ्याल्लस्य नेत्त्वम्, कर्तृविवक्षायां भू ल इति स्थिते ।

## लस्य ॥ ३ । ४ । ७७ ॥

लस्येत्ययमधिकारः । अकार उच्चारणार्थः । लकारमात्रं स्थानित्वेनाधिक्रियते । दशलकारा अनुबन्धविशिष्टा विहिता अर्थविशेषे कालविशेषे च, तेषां विशेषकराननुबन्धानुत्सृज्य यत्सामान्यं तद्ध गृह्यते । षट्टितश्चत्वारो ङितः । लट् । लिट् । लुट् । लृट् । लोट् । लेट् । लङ् । लिङ् । लुङ् । लृङ् ।

## तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ॥ ३ । ४ । ७८ ॥

लस्य तिबादय आदेशा भवन्ति । तिप्सिप्मिपां पकारः स्वरार्थः । इटस्टकार इटोऽदितिविशेषणार्थः । महिङो ङकारस्तिङितिप्रत्याहारग्रहणार्थः ।

## लः परस्मैपदम् ॥ १ । ४ । ९९ ॥

ल इतिषष्ठी आदेशापेक्षा । लादेशाः परस्मैपदसंज्ञा भवन्ति । तिप्, तस्, झि, सिप्, थस्, थ, मिप्, वस्, मस्, । शतृक्वसूच ।

## तङानावात्मनेपदम् ॥ १ । ४ । १०० ॥

---

[१] कर्तरि कृत् इत्यस्मात् 'कर्त्तरि' इत्यनुकर्षणीयं चकारद्वयेन ।
[२] कर्मणः कर्त्रधीनत्वेनादौ कर्तरि लकाराः प्रदर्श्यन्ते ।

तङितिप्रत्याहारो नवानां वचनानाम् । आनइति शानच्-कानचोर्ग्रहणम् । त्यक्तानुबन्धत्वात् । पूर्वेण परस्मैपदसंज्ञायां प्राप्तायां तङानयोरात्मनेपदसंज्ञाविधीयते । त, आताम्, झ, थास्, आथाम्, ध्वम्, इट्, वहि, महिङ् ।

## अनुदात्तङित आत्मनेपदम् ॥ १ । ३ । १२ ॥

अविशेषेण धातोरात्मनेपदं परस्मैपदं च विधास्यते तत्रायं नियमः क्रियते । अनुदात्तेतो ये धातवो ङितश्च तेभ्य एव आत्मनेपदं भवति नान्येभ्यः ।

## शेषात्कर्तरि परस्मैपदम् ॥ १ । ३ । ७८ ॥

येभ्यो धातुभ्यो येन विशेषणेनात्मनेपदमुक्तं ततो यदन्यत् स शेषः । शेषात् कर्तरि परस्मैपदं भवति ।

## तिङ्स्त्रीणित्रीणि प्रथममध्यमोत्तमाः ॥ १ । ४ । १०१ ॥

तिङोऽष्टादशप्रत्ययाः, नव परस्मैपदसंज्ञकाः, नवात्मनेपदसंज्ञकाः, तत्र परस्मैपदेषु त्रयस्त्रिका यथाक्रमं प्रथममध्यमोत्तमसंज्ञा भवन्ति । आत्मनेपदेष्वपि त्रयस्त्रिकाः प्रथममध्यमोत्तमसंज्ञा भवन्ति । तिप्, तस्, झि, इति प्रथमः । सिप्, थस्, थ इति मध्यमः । मिप्, वस्, मस्, इति उत्तमः । आत्मनेपदेषु त, आतां, झ इति प्रथमः । थास्, आथाम्, ध्वम् इति मध्यमः । इट्, वहि, महिङ्, इत्युत्तमः । प्रथममध्यमोत्तमप्रदेशाः शेषे प्रथम इत्येवमादयः ॥

## (१) युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । १ । ४ । १०५ ॥

युष्मद्युपपदे सति व्यवहिते चाऽव्यवहिते सति समानाऽधिकरणे समानाभिधेये तुल्यकारके स्थानिनि प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि मध्यमपुरुषो भवति ॥

[१] उपोच्चारितं पदमुपपदम् न तु कृत्रिमं तस्येहाप्राप्तेः ।

**प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १।४।१०६ ॥**

प्रहासः, परिहासः क्रीड़ा। प्रहासे गम्यमाने मन्योपपदे धातोर्मध्यमपुरुषो भवति। मन्यतेश्चोत्तमः स चैकवद्भवति। एहि मन्ये ओदनं भोक्ष्यसे इति भुक्तः सोऽतिथिभिः। एतमेत वा मन्ये ओदनं भोक्ष्येथे। भोक्ष्यध्वे। भोक्ष्ये। भोक्ष्यावहे। भोक्ष्यामहे। मन्यसे। मन्येथे। मन्यध्वे। इत्यादिरर्थः। युष्मद्युपपदे इत्याद्यनुवर्तते। तेनेह न, एतु भवान् मन्यते ओदनं भोक्ष्ये इतिभुक्तः सोऽतिथिभिः। प्रहासे किम्, यथार्थकथने माभूत्। एहि मन्यसे ओदनं भोक्ष्ये इतिभुक्तः सोऽतिथिभिरित्यादि ॥

**अस्मद्युत्तमः ॥ १।४।१०७ ॥**

अस्मद्युपपदे समानाभिधेये प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि उत्तमपुरुषो भवति ॥

**शेषे प्रथमः ॥ १।४।१०८ ॥**

यत्र युष्मदस्मदी समानाधिकरणे उपपदे न स्तस्तत्र शेषे प्रथमपुरुषो भवति।

**तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ १।४।१०२ ॥**

तान्येकवचन द्विवचन बहुवचन संज्ञानि भवन्ति। तिबित्येकवचनम्। तसिति द्विवचनम्। झि इतिबहुवचनम् ॥

**तिङ्शित्सार्वधातुकम् ॥ ३।४।११३ ॥**

तिङः शितश्च धात्वधिकारोक्ताः प्रत्ययाः सार्वधातुकसंज्ञा भवन्ति ॥

**(१) कर्तरि शप् ॥ ३।१।६८ ॥**

कर्तृवाचिनि सार्वधातुके परतो धातोः शप् प्रत्ययो भवति। शपावितौ। पकारः स्वरार्थः, शकारः सार्वधातुकार्थः। भू-अ-ति।

[१] ननु भावकर्मणोर्यग्विधानात् कर्त्तरीति व्यर्थमिति चेन्न, उत्तरार्थत्वात्। अन्यथा अपवादविप्रतिषेधेन भावकर्मणोरपि दिवादिभ्यः श्यन् स्यात्।

## सार्वधातुकार्द्धधातुकयोः ॥ ७ । ३ । ८४ ॥

सार्वधातुके आर्द्धधातुके प्रत्यये परत इगन्तस्याङ्गस्य गुणो भवति । अवादेशः । भवति । भवतः । आर्द्धधातुके । कर्त्ता, चेता, स्तोता ॥

## झोऽन्तः ॥ ७ । १ । ३ ॥

प्रत्ययावयवस्य झस्य अन्त इत्ययमादेशो भवति । अतो गुणे । भवन्ति । भवसि । भवथः । भवथ ।

## अतो दीर्घो यञि ॥ ७ । ३ । १०१ ॥

अकारान्तस्याङ्गस्य दीर्घो भवति यञादौ सार्वधातुके परतः । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः ।

## ( १ ) परोक्षे लिट् ॥ ३ । २ । ११५ ॥

भूतानद्यतनपरोक्षेऽर्थे [२] [३] वर्त्तमानाद्धातोर्लिट्प्रत्ययो भवति । लस्य तिबादयः ।

## लिट् च ॥ ३ । ४ । ११५ ॥

लिडादेशस्तिङार्द्धधातुकसंज्ञ एव न तु सार्वधातुकसंज्ञः । तेन शबादयो न ।

## परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ३ । ४ । ८२ ॥

लिडादेशानां परस्मैपदसंज्ञकानां यथासंख्यं तिबादीनां णलादयो नवादेशा भवन्ति । लकारः स्वरार्थः । णकारो वृद्ध्यर्थः । भू अ इति स्थिते ।

## भुवो वुग् लुङ्लिटोः ॥ ६ । ४ । ८८ ॥

---

[ १ ] परोक्षत्वञ्च साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वम् ।

[ २ ] भूतत्वं वर्तमानध्वंसप्रतियोगिसमयवृत्तित्वम् ।

[ ३ ] अतीतरात्रेरन्त्ययामेनागामिन्याः पूर्वयामेन च सहितः कालोऽद्यतनस्तद्भिन्नोऽनद्यतनः ।

सुवो वुगागमो भवति लुङि लिटि चाजादौ परतः। नित्यत्वाद्वुक् गुणवृद्धी बाधते।

## एकाचो द्वे प्रथमस्य ॥ ६।१।१॥

अधिकारोऽयम्। एकाच इति द्वे इति प्रथमस्येति च त्रितयमधिकृतं वेदितव्यम्।

## अजादेर्द्वितीयस्य ॥ ६।१।२॥

प्रथमद्विर्वचनाऽपवादोऽयम्। अजादेर्द्वितीयस्यैकाचो द्विर्वचनमधिक्रियते। अच् आदिर्यस्य धातोस्तदवयवस्य द्वितीयस्यैकाचो द्वे भवतः।

## लिटि धातोरनभ्यासस्य ॥ ६।१।८॥

लिटि परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः।

## पूर्वोऽभ्यासः ॥ ६।१।४॥

(१) अस्मिन् प्रकरणे ये द्वे विहिते तयोर्यः पूर्वोऽवयवः सोऽभ्याससंज्ञो भवति।

## (२) हलादिः शेषः ॥ ७।४।६०॥

अभ्यासस्य हलादिः शिष्यते अनादिर्लुप्यते। इति वलोपः।

## ह्रस्वः ॥ ७।४।५९॥

अभ्यासस्याचो ह्रस्वो भवति।

---

[१] अस्मिन्निति-एकाचो द्वे इति पाठे द्वित्वप्रकरणे।

[२] संहितापाठे ऽहलिति विच्छिद्य, अभ्यासस्याहल्, ततः, आदिश्शेषः, आदिर्हल् चेन्न शिष्येत, इति व्याख्यान्तरम्। तेन आट, आटतुरित्यादौ न दोषः।

## भवतेरः ॥ ७ । ४ । ७३ ॥

भवतेरभ्यासोकारस्याकाराऽऽदेशो भवति लिटि परतः ।

## अभ्यासे चर्च ॥ ८ । ४ । ५४ ॥

अभ्यासे वर्त्तमानानां झलां चरादेशो भवति, चकाराज्जश्च । तत्रान्त-रतम्याद्भझशां जशः, खयाञ्चरइति विवेकः । बभूव । भू अतुस् ।

## असिद्धवदत्राभात् ॥ ६ । ४ । २२ ॥

इत ऊर्ध्वमापादपरिसमाप्तेराभीयं समाना श्रये तस्मिन्कर्तव्ये तदसिद्धम्, इति वुकोऽसिद्धत्वादुवङि प्राप्ते ( वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ) । बभूवतुः । बभूवुः । भू-थ ।

## आर्धधातुकस्येड्वलादेः ॥ ७ । २।३५ ॥

आर्द्धधातुकस्य वलादेरिडागमो भवति । भू इ थ । अत्र वुकः पर-त्वाद्गुणे प्राप्ते, एवमुत्तमे णलि णित्वाभावपक्षेऽपि ।

## (१) इन्धिभवतिभ्याञ्च ॥ १ । २ । ६ ॥

इन्धिभवतिभ्यां परो लिट् प्रत्ययः किद्भवति ।

## क्ङिति च ॥ १ । १ । ५ ॥

निमित्तसप्तम्येषा । क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवतः । बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम ।

## अनद्यतने लुट् ॥ ३ । ३ । १५ ॥

भविष्यदनद्यतनेऽर्थे वर्तमाना द्धातोर्लुट्प्रत्ययो भवति ।

---

[१] एतत्सूत्रं तु प्रत्याख्यातमेवाकरे । तथाच वार्तिकम्-इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम् ।

## स्यतासी लृलुटोः ॥ ३ । १ । ३३ ॥

लृरूपमुत्सृष्टानुबन्धं सामान्यमेकमेव, तस्मिन् लुटि च परतो धातोर्यथा-सङ्ख्यं स्यतासी प्रत्ययौ भवतः । लृ इति लृट्लृङोर्ग्रहणम् । शबाद्यपवादः ।

## आर्द्धधातुकं शेषः ॥ ३ । ४ । ११४ ॥

तिङः शितश्च वर्जयित्वाऽन्यः प्रत्ययः शेषो धातुसंशब्दनेन विहित आर्धधातुकसंज्ञो भवति । इट् ।

## लुटः प्रथमस्य डारौरसः ॥ २ । ४ । ८५ ॥

लुडादेशस्य प्रथमपुरुषस्य परस्मैपदस्यात्मनेपदस्य च डारौरस् इत्येत आदेशा भवन्ति यथासंख्यम् । डित्वसामर्थ्यादभस्यापि टेर्लोपः ।

## पुगन्तलघूपधस्य च ॥ ७ । ३ । ८६ ॥

पुगन्तस्याङ्गस्य लघूपधस्य च सार्वधातुकार्द्धधातुकयो र्गुणो भवति । भवित् आ, अत्रेको गुणे प्राप्ते ।

## दीधीवेवीटाम् ॥ १ । १ । ६ ॥

दीधीवेव्योरिटश्च ये गुणवृद्धी प्राप्नुतस्ते न भवतः । भविता ।

## (१) रि च ॥ ७ । ४ । ५१ ॥

रेफादौ च प्रत्यये परतस् तासस्त्योस्सकारस्य लोपो भवति । भवितारौ भवितारः ।

## तासस्त्योर्लोपः ॥ ७ । ४ । ५० ॥

तासेरस्तेश्च सकारस्य सकारादौ प्रत्यये लोपो भवति । भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः ।

---

[१] तासेरेव सकारस्य लोपो नास्तेः, ततो रादिप्रत्ययस्याऽसम्भवात्, व्यतिरे इतिकाशिकोक्तमुदाहरणमपि चिन्त्यम् ।

## लृट् शेषे च ॥ ३ । ३ । १३ ॥

क्रियार्थोपपदादन्यः शेषः । शेषे शुद्धे भविष्यति काले चकारात् क्रियायाञ्चोपपदे क्रियार्थायां धातो लृट् प्रत्ययो भवति । स्ये, इटि, षत्वे च । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । दीर्घे । भविष्यामि । भविष्यावः । भविष्यामः ।

## लिङर्थे लेट् ॥ ३ । ४ । ७ ॥

विध्यादौ हेतुहेतुमद्भावादौ च धातो र्लेट् स्याच्छन्दसि ।

## सिब्बहुलं लेटि ॥ ३ । १ । ३४ ॥

धातोः सिप् प्रत्ययो भवति बहुलं लेटि परतः । आर्द्धधातुकत्वादिटि, भू इ स् ति । ( सिब्बहुलं णिद्वक्तव्यः ) वृद्धावावादेशे षत्वे च, भाविष् ति

## लेटोऽडाटौ ॥ ३ । ४ । ९४ ॥

लेटोऽडाटावागमौ भवतः पर्यायेण, तौ च पित्संज्ञकौ स्तः । भाविषति । भाविषाति ।

## इतश्च लोपः परस्मैपदेषु ॥ ३ । ४ । ९७ ॥

लेट्सम्बन्धिनः परस्मैपदे इकारस्य लोपो वा । भाविषद्(त्) । भाविषाद्(त्) । णित्वाभावपक्षे । भविषति । भविषाति । भविषद्(त्) । भविषाद्(त्) । पक्षे शप् । भवति । भवाति । भवद्(त्) । भवाद्(त्) । भाविषतः । भाविषातः । भविषतः । भविषातः । भवतः । भवातः । भाविषन्ति । भाविषान्ति । भाविषन् । भाविषान् । भविषन्ति । भविषान्ति । भविषन् । भविषान् । भवन्ति । भवान्ति । भवन् । भवान् । भाविषसि । भाविषासि । भाविषः । भाविषाः । भविषसि । भविषासि । भविषः । भविषाः । भवसि । भवासि । भवः । भवाः । भाविषथः । भाविषाथः ।

भविषथः । भविषाथः । भवथः । भवाथः । भाविषथ । भाविषाथ । भविषथ । भविषाथ । भवथ । भवाथ । भाविषमि । भाविषामि । भाविषम् । भाविषाम् । भविषमि । भविषामि । भविषम् । भविषाम् । भवमि । भवामि । भवम् । भवाम् ।

## स उत्तमस्य ॥ ३ । ४ । ९८ ॥

लेट्सम्बन्धिन उत्तमस्य सस्य वा लोपः । भाविषव । भाविषाव । भाविषवः । भाविषावः । भविषव । भविषाव । भविषवः । भविषावः । भववः । भवावः । भवव । भवाव । भाविषम । भाविषाम । भाविषमः । भाविषामः । भविषम । भविषाम । भविषमः । भविषामः । भवम । भवाम । भवमः । भवामः ।

## लोट् च ॥ ३ । ३ । १६२ ॥

लोट् प्रत्ययो भवति धातो र्विध्यादिष्वर्थेषु ।

## आशिषि लिङ्लोटौ ॥ ३ । ३ । १७३ ॥

आशीर्विशिष्टेऽर्थे वर्तमानाद्धातो र्लिङ्लोटौ प्रत्ययौ भवतः ।

## एरुः ॥ ३ । ४ । ८६ ॥

लोडादेशानामिकारस्य उकारादेशो भवति । भवतु ।

## तुह्योस्तातङाशिष्यन्यतरस्याम् ॥ ७ । १ । ३५ ॥

तु हि इत्येतयोराशिषि विषये तातङादेशो भवत्यन्यतरस्याम् । भवतात् । अनेकाल्त्वात् सर्वादेशः ।

## (१) लोटो लङ्वत् ॥ ३ । ४ । ८५ ॥

लोटो लङ्वत् कार्य्यम् भवति । तेन तामादयस्सलोपश्च ।

[१] षष्ठ्यन्ताद्वतिः ।

## तस्थस्थमिपान्तान्तन्तामः ॥ ३ । ४ । १०१ ॥

ङित इत्येव । ङिल्लकारसम्बन्धिनां चतुर्णां यथासंख्यं तामादय-आदेशा भवन्ति । भवताम् । भवन्तु ।

## सेर्ह्यपिच्च ॥ ३ । ४ । ८७ ॥

लोट इत्येव । लोडादेशस्य सेर्हि इत्ययमादेशो भवति, अपिच्च भवति ।

## अतो हेः ॥ ६ । ४ । १०५ ॥

अकारान्तादङ्गादुत्तरस्य हेर्लुग् भवति । भव । भवतात् । भवतम् । भवत ।

## मेर्निः ॥ ३ । ४ । ८९ ॥

लोट इत्येव । लोडादेशस्य मेर्निरादेशो भवति ।

## आडुत्तमस्य पिच्च ॥ ३ । ४ । ९२ ॥

लोट इत्येव । लोट्सम्बन्धिन उत्तमपुरुषस्याडागमो भवति । स चोत्तमपुरुषः पिद् भवति । हिन्योरुत्वं न, इकारोच्चारणसामर्थ्यात् । भवानि ।

## नित्यं ङितः ॥ ३ । ४ । ९९ ॥

ङितो लकारस्य य उत्तमस्तस्य नित्यं सकारस्य लोपो भवति । भवाव । भवाम ।

## अनद्यतने लङ् ॥ ३ । २ । १११ ॥

[ २ ] लुगपेक्षया परत्वाद्धेस्तातङ्, अन्तरङ्गानपीति न्यायस्तु ज्ञापकसिद्धत्वादनित्य इति शब्देन्दुशेखरे । अन्तरङ्गमेव लुग् बाधते, न तु परमिति वा ।

भूत इत्येव । अविद्यमानाद्यतने भूतेऽर्थे वर्त्तमानाद्धातो र्लङ्प्रत्ययो भवति ।

## लुङ्लङ्लृङ्क्ष्वडुदात्तः ॥ ६ । ४ । ७१ ॥

लुङ्लङ्लृङ्इत्येतेषु परतोऽङ्गस्याडागमो भवति, उदात्तश्च स भवति।

## इतश्च ॥ ३ । ४ । १०० ॥

ङित इत्येव । ङिल्लकारसम्बन्धिन इकारस्य नित्यं लोपो भवति । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ।

## विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ॥ ३ । ३ । १६१ ॥

विधिः प्रेरणम्, निमन्त्रणम् नियोगकरणम्, आमन्त्रणम् कामचार-करणम्, अधीष्टः सत्कारपूर्वको व्यापारः, सम्प्रश्नः सम्प्रधारणम्, प्रार्थनं याच्ञा । विध्याद्यर्थेषु धातोर्लिङ्प्रत्ययो भवति । भव-तिप् ।

## यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ ३ । ४ । १०३ ॥

लिङ इत्येव । परस्मैपदविषयस्य लिङो यासुडागमो भवति, सीयुटोऽ-पवादः, स चोदात्तो भवति, ङिच्च ।

## (१) सुट् तिथोः ॥ ३ । ४ । १०७ ॥

लिङ इत्येव । लिङ्सम्बन्धिनोस्तकारथकारयोः सुडागमो भवति ।

---

[ १ ] सुटा यासुट् न बाध्यते लिङो यासुट् तकारथकारयोः सुडिति विषय-भेदात् ।

## लिङः सलोपोऽनन्त्यस्य ॥ ७ । २ । ७९ ॥

सार्वधातुके यो लिङ् तस्य अनन्त्यस्य सकारस्य लोपो भवति । कः पुनरनन्त्यो लिङः सकारः, यो यासुट्सुट्सीयुटाम् । इति सकारद्वयस्यापि निवृत्तिः । सुटः श्रवणं त्वाशीर्लिङि, स्फुटतरन्तु तत्रात्मनेपदे ।

## अतो येयः ॥ ७ । २ । ८० ॥

अकारान्तादङ्गादुत्तरस्य या इत्येतस्य सार्वधातुकस्य इय् इत्ययमादेशो भवति । गुणः । लोपोव्योर्वलि । भवेत् । भवेताम् ।

## झेर्जुस् ॥ ३ । ४ । १०८ ॥

लिङादेशस्य झेर्जुस् आदेशो भवति । झोन्ताऽपवादः ।

## उस्यपदान्तात् ॥ ६ । १ । ९६ ॥

अवर्णादपदान्तादुसि पूर्वपरयोराद्गुणापवादः पररूपमेकादेशो भवति । इति प्राप्ते, परत्वान्नित्यत्वाच्च 'अतोयेय' इति प्राञ्चः । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ।

## लिङाशिषि ॥ ३ । ४ । ११६ ॥

आशिषि विषये यो लिङ् स आर्धधातुकसंज्ञो भवति । सार्वधातुकसंज्ञाया अपवादः ।

## किदाशिषि ॥ ३ । ४ । १०४ ॥

आशिषि यो लिङ् तस्य यासुडागमो भवति, स चोदात्तः किद्वद् भवति । कित्वाद् गुणो न । विशेषफलन्तु उच्यादित्यादि । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ।

---

[१] यद्यप्यन्तरङ्गत्वात् पररूपं न्याय्यम् तथापि यास् इत्येतस्य इय् इति व्याख्येयम् एवञ्च सलोपस्यापवाद इय् । येय इत्यत्र तु सन्धिरार्षः । एतच्च विप्रतिषेधसूत्रे भाष्ये ।

## लुङ् ॥ ३ । २ । ११० ॥

भूतेऽर्थे वर्तमानाद्धातो र्लुङ्प्रत्ययो भवति ।

## माङि लुङ् ॥ ३ । ३ । १७५ ॥

माङ्युपपदे धातो र्लुङ्प्रत्ययो भवति । सर्वलकारापवादः ।

## स्मोत्तरे लङ् च ॥ ३ । ३ । १७६ ॥

स्मशब्दोत्तरे माङ्युपपदे धातो र्लङ्प्रत्ययो भवति । चकाराल्लुङ् ।

## च्लि लुङि ॥ ३ । १ । ४३ ॥

धातोश्च्लिः प्रत्ययो भवति लुङि परतः । इकार उच्चारणार्थः, चकारः स्वरार्थः । शबाद्यपवादः ।

## च्लेः सिच् ॥ ३ । १ । ४४ ॥

च्लेः सिजादेशो भवति । इकार उच्चारणार्थः । चकारः स्वरार्थः ।

## गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ २ । ४ । ७७ ॥

गाति,स्था,घु,पा,भूइत्येतेभ्यः परस्य सिचो लुग् भवति परस्मैपदेषु परतः ।

## ( १ ) अस्तिसिचोऽपृक्ते ॥ ७ । ३ । ९६ ॥

अस्तेरङ्गात् सिजन्ताच्च परस्याऽपृक्तस्य सार्वधातुकस्य ईडागमो भवति । आहिभुवरीटि प्रतिषेध इति स्थानिवद्भावप्रतिषेधादिह न भवति ।

---

[ १ ] सिच्च अस्‌च्चेति समाहारद्वन्द्वे अस्तीत्यव्ययेन कर्मधारये च विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागम इत्यर्थस्तेन नेह-सिचो लुप्तत्वादिति केचित् । भाष्यकारास्त्वाहुः, । अस्तिसिचोऽपृक्ते इति द्विसकारकोऽयं निर्देशः ।

## भूसुवोस्तिङि ॥ ७ । ३ । ८८ ॥

भूसू इत्येतयो स्तिङि सार्वधातुके गुणो न भवति । अभूत् । अभूताम् ।

## सिजभ्यस्तविदिभ्यश्च ॥ ३ । ४ । १०० ॥

सिचः परस्य अभ्यस्तसंज्ञकेभ्यो वेत्तेश्चोत्तरस्य झेर्जुसादेशो भवति । इति प्राप्ते ।

## आतः ॥ ३ । ४ । ११० ॥

सिच आकारान्ताच्च परस्य झेर्जुसादेशो भवति । पूर्वेणैव सिद्धे नियमार्थं वचनम् । आत एव सिज्लुगन्ताज्जुस् नान्यस्मादिति । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ।

## न माङ्योगे ॥ ६ । ४ । ७४ ।

माङ्योगे लुङ्लङ्लृङ्क्षु यदुक्तं तन्न भवति । मा भवान्भूत् । मा स्म भवत् । मा स्म भवान्भूत् ।

## लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ ३ । ३ । १३९ ॥

हेतुहेतुमतोर्लिङित्येवमादिकं लिङो निमित्तम्, तत्र लिङ्निमित्ते भविष्यति काले लृङ् प्रत्ययो भवति क्रियातिपत्तौ सत्याम् । क्रियाया अनिष्पत्तिः क्रियातिपत्तिः । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् । अभोक्ष्यत भवान् घृतेन यदि मत्समीपमागमिष्यत् । दक्षिणेनचेदयास्यन्नशकटं पर्याभविष्यत् ।

## ते प्राग्धातोः ॥ १ । ४ । ८० ॥

ते गत्युपसर्गसंज्ञकाः धातोः प्राक् प्रयोक्तव्याः ।

## आनिलोट् । ८ । ४ । १६ ॥

आनीत्येतस्य लोडादेशस्योपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति । प्रभवाणि ॥ * दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः ॥ दुःस्थितिः । दुर्भवानि । * अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् ॥ अन्तर्धा । अन्तर्धिः । अन्तर्भवाणि ।

## शेषे विभाषाऽकखादावषान्त उपदेशे ॥ ८ । ४ । १८ ॥

अककारखकारादिरषकारान्तश्च उपदेशे यो धातुः शेषस्तस्मिन् परत उपसर्गस्थान्निमित्तादुत्तरस्य नेर्नकारस्य विभाषा णकार आदेशो भवति । प्रणिभवति । प्रनिभवति । इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तम्, संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ १ ॥ इति । सत्ताद्यर्थनिर्देशश्चोपलक्षणम् । यागात्स्वर्गो भवतीत्यादावुत्पद्यत इत्याद्यर्थात् । उपसर्गास्त्वर्थविशेषस्य द्योतकाः । प्रभवति । पराभवति । संभवति । अनुभवति । अभिभवति उद्भवति । परिभवतीत्यादौ विलक्षणार्थावगतेः । उक्तं च, उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते । प्रहाराहारसंहारविहारपरिहारवत् ॥ १ ॥ इति ।
एध वृद्धौ । कत्थन्ताः षट्त्रिंशदनुदात्तेतः ।

## टित आत्मनेपदानां टेरे ॥ ३ । ४ । ७० ॥

टितो लकारस्य स्थाने यान्यात्मनेपदानि तेषां टेरेकारादेशो भवति । एधते ।

## सार्वधातुकमपित् ॥ १ । २ । ४ ॥

सार्वधातुकं यदपित्तन् ङिद्वद् भवति ।

## आतो ङितः ॥ ७ । २ । ८१ ॥

आकारस्य ङिदवयवस्य अकारान्तादङ्गादुत्तरस्य सार्वधातुकस्य इय् इत्ययमादेशो भवति। एधेते। एधन्ते।

## थासः से ॥ ३ । ४ । ८० ॥

टितो लकारस्य यस्थास्तस्य से शब्द आदेशो भवति। एधसे। एधेथे। एधध्वे। अतो गुणे। एधे। अतो दीर्घो यञि। एधावहे। एधामहे।

## इजादेश्च गुरुमतोऽनृच्छः ॥ ३ । १ । ३६ ॥

इजादि र्यो धातु र्गुरुमान् ऋच्छतिवर्जितस्तस्माच्च लिटि परत आम्-प्रत्ययो भवति। आमो मकारस्य नेत्त्वम्, आस्कासोराम्विधानाज्-ज्ञापकात्।

## आमः ॥ २ । ४ । ८१ ॥

आमः परस्य लेर्लुग् भवति।

## कृञ्चानुप्रयुज्यते लिटि ॥ ३ । १ । ४० ॥

आम्प्रत्ययस्य पश्चात् कृञनुप्रयुज्यते लिटि परतः। कृञितिप्रत्याहारेण कृभ्वस्तयो गृह्यन्ते।

## स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥ १ । ३ । ७२ ॥

स्वरितेतो ये धातवो ञितश्च तेभ्य आत्मनेपदं भवति। कर्त्तारंचेत् क्रियाफलमभिप्रैति। परगामिनि क्रियाफले तु कृञः परस्मैपदे प्राप्ते।

## ( १ ) आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ॥ १ । ३ । ६३ ॥

आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रत्ययस्येव धातोः कृञोऽनुप्रयोगस्यात्मनेपदम् भवति । कृ त इति स्थिते ।

## ( २ ) लिटस्तझयोरेशिरेच् ॥ ३ । ४ । ८१ ॥

लिडादेशयोस्तझयो र्यथासंख्यमेश् इरेच् इत्येतावादेशौ भवतः ।

## असंयोगाल्लिट् कित् ॥ १ । २ । ५ ॥

असंयोगान्ताद्धातोः परो लिट् प्रत्ययोऽपित् किद्भवति [3] । क्ङितिचेति निषेधात्सार्वधातुकार्धधातुकयोरिति गुणो न । द्वित्वात्परत्वाद्यणि कृते ।

## द्विर्वचनेऽचि ॥ १ । १ । ५९ ॥

द्विर्वचननिमित्तेऽचि अजादेशः स्थानिवद्भवति द्विर्वचने एव कर्तव्ये । रूपातिदेशश्चायम् नियतकालस्तेनकृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते ।

## उरत् ॥ ७ । ४ । ६६ ॥

ऋवर्णान्तस्याभ्यासस्याकारादेशो भवति प्रत्यये परतः । रपरत्वम् । हलादिश्शेषः । प्रत्यये किम् । वव्रश्च [4] ।

---

[ १ ] अत्र कृञ् ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीतिज्ञायते । तेन "कृभ्वस्तियोग" इत्यतः "कृञोद्वितीये"ति ञकारेण प्रत्याहाराश्रयणात् कृभ्वस्तिलाभः । सम्पदिस्तुतदन्तर्भूतोऽपि सामान्यविशेषरूपेणाभेदान्वयबोधनासम्भवान्न प्रयुज्यते "पूर्ववत्सन" इत्यतः पूर्ववदित्यनुवृत्य वाक्यभेदेन सम्बध्यते । पूर्ववदेवात्मनेपदं न तु तद्विपरीतम् । तेन इन्दाञ्चकारेत्यादौ नात्मनेपदम् ।

[ २ ] एकारोच्चारणेन ज्ञाप्यते, तङादेशानां टेरेत्वं न, तेन डारौरसां न ।

[ ३ ] अङ्गे न प्रत्यय आक्षिप्यते इतिभावः ।

[ ४ ] वव्रश्चेति अन्यथा— उरदत्वस्यापरनिमित्तत्वात् स्थानिवत्वाभावेन नसम्प्रसारण इति निषेधानापत्तिः ।

## कुहोश्चुः ॥ ७ । ४ । ६२ ॥

अभ्यासस्य कवर्गहकारयो श्चवर्गादेशो भवति एधाञ्चक्रे । एधाञ्चक्राते । एधाञ्चक्रिरे ।

## एकाच उपदेशेऽनुदात्तात् ॥ ७ । २ । १० ॥

उपदेशे य एकाज् धातुरनुदात्तश्च तस्मादिडागमो न भवति । एधाञ्चकृषे । एधाञ्चक्राथे ।

## इणः षीध्वंलुङ्लिटान्धोऽङ्गात् ॥ ८ । ३ । ७८ ॥

इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां यो धकारस्तस्य मूर्धन्यादेशो भवति । एधाञ्चकृढ्वे । एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधांबभूव । असि विशेषः अस्तेर्भूभावस्तु न अनुप्रयोगसामर्थ्यात् ।

## अत आदेः ॥ ७ । ४ । ७० ॥

अभ्यासस्यादेरकारस्य दीर्घो भवति लिटिपरतः । पररूपापवादः । एधामास । एधामासतुः । एधामासुः । एधामासिथ । एधामासथुः । एधामास । एधामास । एधामासिव । एधामासिम । एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे ।

## धि च ॥ ८ । २ । २५ ॥

धकारादौ प्रत्यये परतः सकारस्य लोपो भवति । एधिताध्वे ।

## ह एति ॥ ७ । ४ । ५२ ॥

तासस्त्योः सकारस्य हकारादेशो भवति एति परतः । एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे ।

## वैतोऽन्यत्र ॥ ३ । ४ । ९६ ॥

लेट् इत्येव । लेट् सम्बन्धिन एकारस्य वा ऐकारादेशो भवति । अन्यत्रेत्यनन्तरो विधिरपेक्ष्यते । आत ऐ इत्येतद्विषयं वर्जयित्वा, एधिषतै । एधिषातै । एधिषते । एधिषाते । शप्यत्ते । एधतै । एधातै । एधते । एधाते ।

## आत ऐ ॥ ३ । ४ । ९५ ॥

लेट इत्येव । लेट् सम्बन्धिन आकारस्य ऐकारादेशो भवति प्रथमपुरुषमध्यमपुरुषात्मनेपदद्विवचनयोः । एधिषैते २ एधैते २ । एधिषन्तै । एधिषान्तै । एधिषन्ते ।

एधिषान्ते । एधन्तै । एधान्तै । एधन्ते । एधान्ते । एधिषसै । एधिषासै । एधिषसे । एधिषासे । एधसै । एधासै । एधसे । एधासे । एधिषैथे २ । एधैथे २ । एधिषध्वै । एधिषाध्वै । एधिषध्वे । एधिषाध्वे । एधध्वै । एधाध्वै । एधध्वे । एधाध्वे । एधिषै २ । एधिषे । एधै २ । एधे [illegible] । एधिषवहै । एधिषावहै । एधिषवहे । एधिषावहे । एधवहै । एधावहै । एधवहे । एधावहे । एधिषमहै । एधिषामहै । एधिषमहे । एधिषामहे । एधमहै । एधामहै । एधमहे । एधामहे ।

## आमेतः । ३ । ४ । ९० ।

लोट् इत्येव । लोट् सम्बधिन एकारस्य आमित्ययमादेशो भवति । एधताम् । आतोङितः । एधेताम् । एधन्ताम् ।

## सवाभ्यां वामौ [illegible] । ४ । ९१ ॥

लोट् इत्येव । सकारवकाराभ्यामुत्तरस्य लोट् सम्बन्धिन एकारस्य यथासंख्यम् व, अम् इत्येतावादेशौ भवतः । आमोऽपवादः । एधस्व । एधेथाम् । एधध्वम् ।

## एत ऐ ॥ ३ । ४ । ९३ ॥

लोडुत्तमसम्बन्धिन एकारस्य ऐकारादेशोभवति । आमोऽपवादः । एधै । एधावहै । एधामहै ।

## आडजादीनाम् ॥ ६ । ४ । ७२ ॥

आडागमो भवत्यजादीनाम् लुङ्लङ्लृङ्षु परत उदात्तश्च स भवति । आटश्चेतिवृद्धिः । ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ।

## लिङः सीयुट् ॥ ३ । ४ । १०२ ॥

लिङादेशानां सीयुडागमो भवति । सलोपः । एधेत । एधेयाताम् ।

## झस्य रन् ॥ ३ । ४ । १०५ ॥

लिङ इत्येव । झस्य लिङादेशस्यरन्नित्ययमादेशोभवति । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् ।

## इटोऽत् ॥ ३ । ४ । १०६ ॥

लिङादेशस्य इटोऽदित्ययमादेशो भवति । एधेय । एधेवहि । एधेमहि । सीयुट्, इट्, सुट्, यलोपः । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् । एधिषीय । एधिषीवहि । एधिषीमहि । ऐधिष्ट । ऐधिषाताम् ।

## आत्मनेपदेष्वनतः ॥ ७ । १ । ५ ॥

आत्मनेपदेषु यो झकारस्तस्यानकारान्तादङ्गादुत्तरस्यादित्ययमादेशो भवति। ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। ऐधिढ्वम् (१) ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि।

स्पर्द्ध संघर्षे, संघर्षः पराभिभवेच्छा। स्पर्द्धते।

## शर्पूर्वाः खयः ॥ ७ । ४ । ६१ ॥

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते। पस्पर्द्धे। पस्पर्द्धाते इत्यादि। स्पर्द्धिता स्पर्द्धिष्यते। स्पर्द्धताम्। अस्पर्द्धत। स्पर्द्धेत। स्पर्द्धिषीष्ट। अस्पर्द्धिष्ट। अस्पर्द्धिष्यत। गाधृ, प्रतिष्ठालिप्सयोर्ग्रन्थेच। बाधृ विलोडने। विलोडनं प्रतीघातः। नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु ( आशिषि नाथ इति वाच्यम् ) अन्यत्र नाथति। दध धारणे। दधते।

## अत एकहल्मध्येऽनादेशादेर्लिटि (२) ॥ ६ । ४ । १२० ॥

लिटि परत आदेश आदि र्यस्याङ्गस्य नास्ति तस्य एकहल्मध्ये असहाययोर्हलोर्मध्ये योऽकारस्तस्य एकारादेशोभवति, अभ्यासलोपश्च लिटि किति परतः। देधे देधाते। देधिरे देधिषे। देधाथे। देधिध्वे। देधे। देधिवहे। देधिमहे। स्कुदि, आप्रवणे (३)।

[१] इणः षीध्वमितिमूर्धन्यः। इड्भिश्च एव इणिहगृह्यतेइतिमते तु ऐधिध्वम्।

[२] लिटीत्यावर्त्य, आदेशविशेषणमेत्वस्य च निमित्तं क्रियते। तत्फलं नेमिथेत्यादि।

[३] आप्रवणमुत्प्लवनमुद्धरणंचत्येवमनिर्दिष्टधात्वर्था धातुपाठोपवृत्त्यां द्रष्टव्याः।

## (१) इदितो नुम्धातोः ॥ ७ । १ । ५८ ॥

इदितोधातोर्नुमागमो भवति । स्कुन्दते । चुस्कुन्दे । स्कुन्दिता । स्कुन्दिष्यते । स्कुन्दताम् । अस्कुन्दत । स्कुन्देत । स्कुन्दिषीष्ट । अस्कुन्दिष्ट । अस्कुन्दिष्यत । श्विदि, श्वैत्ये । अकर्मकः । श्विन्दते । शिश्विन्दे । वदि, अभिवादनस्तुत्योः । वन्दते । ववन्दे । भदि कल्याणे सुखेच । भन्दते । बभन्दे । मदि, स्तुति मोद मद स्वप्न कान्ति गतिषु । स्पदि, किञ्चिच्चलने । क्लिदि, परिदेवने । सकर्मकः । मुद, हर्षे । दद दाने । ददते ।

## (२) न शसददवादिगुणानाम् ॥ ६ । ४ । १२६ ॥

शसददइत्येतयो र्वकारादीनाञ्चधातूनां गुण इत्येवमभिनिर्वृत्तस्य च योऽकारस्तस्य स्थाने एकारादेशो न भवति अभ्यासलोपश्च न । ददे । ददाते । ददिरे । ददिता । ददिष्यते । ददताम् । अददत । ददेत । ददिषीष्ट । अददिष्ट । अददिष्यत । ष्वद, स्वर्द, आस्वादने । आस्वादनमनुभवो रुचिश्च ।

## धात्वादेः षः सः ॥ ६ । १ । ६४ ॥

धातोरादेः षकारस्य स्थाने सकारादेशो भवति । स्वदते । सस्वदे । स्वर्दते । सस्वर्दे । स्वदिता । स्वर्दिता । उर्द माने क्रीड़ायाञ्च ।

## उपधायाञ्च ॥ ८ । २ । ७८ ॥

धातोरुपधाभूतौ यौ रेफवकारौ हल्परौ तयोरुपधाया इको दीर्घो भवति । ऊर्दते । ऊर्दाञ्चक्रे । ऊर्दिता । ऊर्दिष्यते । ऊर्दताम् । और्दत । और्दिष्ट ।

---

[१] इदित इति कर्मधारयेण धातोर्विशेषणं तेन इदिदन्तस्यधातो र्नुम् विधानात् चक्षिङादौन दोष ।

[२] शसिद्योः प्रतिषेधेन, एत्वाभ्योसलोपविधायकसूत्रे वैरूप्यसम्पादक एवादेश आश्रीयते, तेन प्रकृतिजश्चरां हेषु सत्स्वपि तत्प्रवर्तत एव ।

और्दिष्यत । कुर्द, खुर्द, गुर्द, गुद, क्रीडायामेव । कूर्दते । चुकूर्दे । गोदते । षूद, क्षरणे । सूदते । सुषूदे । सूदिता । सूदिष्यते । सेक् , सृप् , सृ, स्तृ, सृज, स्तृ, स्त्या ऽन्ये दन्त्याजन्तसादयः । एकाच्चः षोपदेशाः ष्वष्क् , । स्विद, स्वद्द , स्वञ्ज, स्वप् स्मिङः ॥ १ ॥ दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजो ऽपि । ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञापकात् ।

ह्राद, अव्यक्तेशब्दे । ह्रादते । जह्रादे । ह्रादिता ह्लादी, सुखे च । स्वाद, आस्वादने । पर्द, कुत्सिते शब्दे । यती, प्रयत्ने । येते । युतृ, जुतृ, भासने । योतते । युयुते । जोतते । जुजुते । विथृ, वेथृ, याचने । श्रथि, शैथिल्ये । ग्रथि, कौटिल्ये, कत्थ, श्लाघायाम् । एधादयोऽनुदात्तेतोगताः ।

अथाष्टत्रिंशत्तवर्गीयान्ताः परस्मैपदिनः अत, सातत्यगमने । अतति, अतआदेः । आत । अतिता । अतिष्यति अततु । आतत् । अतेत् । अत्यात् लुङि--आ-अत्, सि्-ी-त् । इति स्थिते ।

## इट ईटि ॥ ८ । २ । २८ ॥

इट उत्तरस्य सकारस्य लोपो भवति ईटि परतः । सलोपस्यासिद्धत्वाद्दीर्घेऽप्राप्ते । ( सिज्लोपे एकादेशे सिद्धो वक्तव्यः ) आतीत् । आतिष्टाम् ।

## सिजभ्यस्तविदिभ्यश्च ॥ ३ । ४ ।१०९ ॥

अङिङर्थ आरम्भः । सिचः परस्य अभ्यस्त संज्ञकेभ्यो वेत्तेश्चोत्तरस्यझेर्जुस् आदेशो भवति । अभ्यस्तविदिग्रहणमसिजर्थम् । आतिषुः आतीः । आतिष्टम् । आतिष्ट । आतिषम् । आतिष्व । आतिष्म ।

## वदव्रजहलन्तस्याचः ॥ ७ ।२ । ३ ॥

[ १ ] तदन्तविधिनैवसिद्धेऽन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम् ।

वदव्रजोर्हलन्तानां चाङ्गानामचः स्थाने वृद्धिर्भवति सिचि परस्मैपदे परतः । इतिप्राप्ते—

## नेटि ॥ ७ । २ । ४ ॥

इडादौ सिचि हलन्ताङ्गस्य वृद्धिर्न भवति । मा भवानतीत् । आतिष्यत् । चिती संज्ञाने चेतति । चिचेत चिचिततुः । चिचितुः । चिचेतिथ । चिचितथुः । चिचित । चिचेत । चिचितिव । चिचितिम । च्युतिर्, आसेचने । ( इर इत्संज्ञा वाच्या ) (१) च्योतति । चुच्योत । च्योतिता ।

## इरितो वा ॥ ३ । १ । ५७ ॥

इरितो धातोःपरस्यच् लेरङादेशो वा भवति परस्मैपदेषु । अच्युतत् अच्युतताम् । अच्युतन् । पक्षे, अच्योतीत् । अच्योतिष्टाम् । अच्योतिषुः । अच्योतिष्यत् । श्च्युतिर, क्षरणे । श्च्योतति । चुश्च्योत । अश्च्युतत् । अश्च्योतीत् । यकार रहितोप्ययम् । श्चोतति । मन्थ विलोडने । मन्थति । ममन्थ । मन्थिता । मन्थिष्यति । मन्थतु । अमन्थत् । मन्थेत् । यासुटः कित्वादनिदितांहलइति नलोपः । मथ्यात् अमन्थीत् । अमन्थिष्यत् । कुथि, पुथि, लुथि, मथि, हिंसासंक्लेशनयोः। इदित्वान्नलोपो न। कुन्थ्यात् । मन्थ्यात् । षिध, गत्याम् । सेधति । सिषेध । सेधिता । सेधिष्यति । सिध्यात् । असेधीत् । असेधिष्यत् ।

'सात्पदाद्योः' इति षत्वनिषेधेप्राप्ते ॥

## उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ॥ ८ । ३ । ६५ ॥

[ १ ] इकारस्य रेफस्य च प्रत्येकमित्संज्ञायमिदित इति नुम् प्रसङ्गः स्यात्।

उपसर्गस्थान्निमित्तादुत्तरस्य सुनोति सुवति स्यति स्तौति स्तोभति स्था सेनय सेध सिच सञ्ज स्वञ्ज इत्येतेषां सकारस्य मूर्द्धन्यादेशो भवति । निषेधति ।

## सदिरप्रतेः ॥ ८ । ३ । ६६ ॥

सदेः सकारस्य उपसर्गस्थान्निमित्तादप्रतेरुत्तरस्य मूर्द्धन्य आदेशो भवति । निषीदति । न्यषीदत् । निषसाद ।

## स्तन्भेः ॥ ८ । ३ । ६७ ॥

स्तन्भेः सकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य मूर्धन्य आदेशो भवति । अभिष्टभ्नाति अभ्यष्टभ्नात् । अभितष्टम्भ । योगविभाग उत्तरार्थः । किञ्च अप्रतेरिति नानुवर्तते । तेन बाहुप्रतिष्टम्भविवृद्धमन्युरितिसिद्धम् ।

## अवाच्चालम्बनाविदूर्ययोः ॥ ८ । ३ । ६८ ॥

अवशब्दादुपसर्गादुत्तरस्यस्तन्भेः सकारस्य मूर्धन्यादेशो भवति । आलम्बनेऽर्थे आविदूर्ये च । आलम्बने, अवष्टभ्यास्ते । आविदूर्ये, अवष्टब्धा सेना ।

## वेश्चस्वनो भोजने ॥ ८ । ३ । ६९ ॥

वेरुपसर्गादवाच्चोत्तरस्य भोजनार्थे स्वनतेः सकारस्य मूर्धन्यादेशो भवति । विष्वणति । व्यष्वणत् । विषष्वाण ।

## परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ॥ ८ । ३ । ७० ॥

परि नि वि इत्येतेभ्य उपसर्गेभ्य उत्तरेषां सेव सित सय सिवु सह सुट् स्तु स्वञ्ज इत्येतेषां सकारस्य मूर्द्धन्य आदेशो भवति । परिषेवते । निषेवते । इत्यादि ॥

## प्राक्सितादड्व्यवायेऽपि ॥ ८ । ३ । ६३ ॥

सेवसिते तिवच्यति, प्राक्सित संशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामस्तत्राड्व्यवायेऽपि मूर्द्धन्यो भवतीत्येवं तद्वेदितव्यम् अपिशब्दादनड्व्यवायेऽपि । न्यषेधत् । न्यषेधीत । न्यषेधिष्यत् ।

## स्थादिष्वभ्यासेन चाभ्यासस्य ॥ ८ । ३ । ६४ ॥

उपसर्गात्सुनोतीत्यत्र स्था, सेनय सेधेति स्थादयस्तेषु स्थादिषु प्राक् सितसंशब्दनात् अभ्यासेन व्यवाये मूर्द्धन्यो भवत्यभ्याससकारस्य च भवतीत्येवं वेदितव्यम् ॥ निषिषेध । निषिषिधतुः ।

## सेधतेर्गतौ ॥ ८ । ३ । ११३ ॥

गतौ वर्तमानस्य सेधतेः सकारस्य मूर्द्धन्यादेशो न भवति । गङ्गां विसेधति । षिधू , शास्त्रे माङ्गल्ये च । शास्त्रम्–शासनम् । सेधति । सिषेध सिषिधतुः । सिषिधुः ।

## स्वरतिसूतिसूयतिधूञूदितो वा ॥ ७ । २ । ४४ ॥

स्वरति सूति सूयति धूञ् इत्येभ्य ऊदिद्भ्यश्चोत्तरस्य वलादेरार्द्धधातुकस्य वा इडागमो भवति ।

## झषस्तथोर्धोऽधः ॥ ८ । २ । ४० ॥

झष उत्तरयोस्तकारथकारयोः स्थाने धकार आदेशो भवति । दधातिं वर्जयित्वा । सिषेद्ध । सिषेधिथ । सिषिधथुः । सिषिध । सिषेध । सिषिधिव । (ध्व) सिषिधिम । (ध्म) सेद्धा । सेधिता । सेत्स्यति । सेधिष्यति । असैत्सीत् ।

## झलो झलि ॥ ८ । २ । २६ ॥

झल उत्तरस्य सकारस्य झलि परतो लोपो भवति । असैद्धाम् । असैत्सुः । असैत्सीः । असैद्धम् । असैद्ध । असैत्सम् । असैत्स्व । असैत्स्म ।

पक्ते । असेधीत् । असेधिष्टाम् । खाद्, भक्षणे । खादति । चखाद । खादिता । खादिष्यति । खद(१), स्थैर्ये हिंसायाञ्च । चाद्भक्षणे । खदति ।

### अत उपधायाः ॥ ७ । २ । ११६ ॥

अङ्गोपधाया अकारस्य स्थाने ञितिणिति च प्रत्यये वृद्धिर्भवति । चखाद । चखदतुः । चखदुः । चखदिथ । चखदथुः । चखद ।

### णलुत्तमो वा ॥ ७ । १ । ९१ ॥

उत्तमो णल्वा णिद्भवति । चखाद । चखद । खदिता । खदिष्यति । खदिषति । खदिषाति ।

### अतो हलादेर्लघोः ॥ ७ । २ । ७ ॥

हलादेरङ्गस्य लघोरकारस्य इडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति । अखादीत् । अखदीत् । अखदिष्यत् । वद् स्थैर्ये । पवर्गीयादिः ।
बदति । बबाद । बेदतुः । बेदुः ।

### थलि च सेटि ॥ ६ । ४ । १२१ ॥

थलि च सेटि परतोऽनादेशादेरङ्गस्य एकहल्मध्यगतस्यातः स्थाने एकार आदेशो भवति, अभ्यासलोपश्च । बेदिथ । बेदथुः । बेद । बबाद । बबद । बेदिव । बेदिम । बदिता । बदिष्यति । बदतु । अबदत् । अबादीदित्यादि । गद्व्यक्तायांवाचि गदति । जगाद । गदिता । गदिष्यति । अगादीत् । अगदीत् ।

[ १ ] स्थैर्ये त्वकर्मकः ।

## नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च। ८। ४।१७॥

निरित्येतस्योपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति। गद नद पत पद घु मा स्यति हन्ति याति वाति द्राति प्साति वपति वहति शाम्यति चिनोति देग्धि इत्येतेषु परतः। प्रणिगदति। रद, विलेखने। रदति। रराद। रदिता। अरादीत्। अरदीत्। णद अव्यक्तेशब्दे।

## णो नः॥ ६। १। ६५॥

धातोरादे र्णकारस्य नकार आदेशो भवति। नदति। ननाद। नेदतुः। नदिता। नदिष्यति। नदतु। अनदत्। नदेत्॥ नद्यात्। अनादीत्। अनदीत्। सर्वे नादयो णोपदेशाः। नृति, नन्दि, नर्दि, नकि, नाटि, नाथृ, नाधृ, नॄ, वर्जम्।

## उपसर्गादसमासेऽपिणोपदेशस्य॥ ८। ४। १४॥

ण उपदेशे यस्यासौ णोपदेशः। णोपदेशस्य धातोर्योनकारः तस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति, असमासेऽपि समासेऽपि। प्रणदति। प्रणिनदति। अर्द, गतौ याचने च। अर्दति। अर्दतः। अर्दन्ति।

## तस्मान्नुड् द्विहलः॥ ७। ४। ७१॥

तस्मादतोऽभ्यासाद्दीर्घीभूतादुत्तरस्य द्विहलोऽङ्गस्य नुडागमो भवति। आनर्द। आनर्दतुः। आनर्दुः। अर्दिता। अर्दिष्यति। आर्दीत्। आर्दिष्टाम्। आर्दिषुः। आर्दिष्यत्। नर्द, गर्द, शब्दे। नर्दति (१)।

[१] "प्रनर्दति" इत्यत्र णोपदेशत्वाभावान्न णः।

गर्दति । तर्द, हिंसायाम् । तर्दति । ततर्द । कर्द, कुत्सिते शब्दे । कर्दति चकर्द । अकर्दीत् । खर्द, दन्दशूके । अति, अदि, बन्धने । आनन्त । इदि, परमैश्वर्ये । इन्दति । इन्दाञ्चकार । इन्दाञ्चक्रतुः । इन्दाञ्चक्रुः । "एकाचः" इतीण् निषेधः । इन्दाञ्चकर्थ । इन्दाञ्चक्रथुः । इन्दिता । इन्दिष्यति । इन्दतु । ऐन्दत् । इन्देत् । इन्द्यात् । ऐन्दीत् । ऐन्दिष्यत् । बिदि, भिदि, अवयवे । बिन्दति (१) । भिन्दति । गडि वदनैकदेशे । गण्डति । णिदि, कुत्सायाम् । निन्दति । निनिन्द । टुनदि, समृद्धौ ।

## आदिर्ञिटुडवः ॥ १ । ३ । ५ ॥

आदिशब्दः प्रत्येकमभिसम्बध्यते । ञि टु डु इत्येतेषां समुदायानामादितो वर्तमानानामित् संज्ञा भवति । नन्दति । ननन्द । नन्दिता । नन्दिष्यति । चदि, आह्लादे सुखे च । त्रदि, चेष्टायाम् । कदि, क्रदि, क्लदि, आह्वाने रोदने च । क्लिदि, परिदेवने । क्लिन्दति । चिक्लिन्द । शुन्ध, शुद्धौ । शुध्यात् । अशुन्धीत् । अशुन्धिष्यत् । इत्यष्टत्रिंशत्परस्मैपदिनः समाप्ताः ।

अथ द्विचत्वारिंशत् कवर्गीयान्ता आत्मनेपदिनः । शीकृ, सेचने । शीकते । लोकृ, दर्शने । श्लोकृ, संघाते । श्लोकते । द्रेकृ, ध्रेकृ, शब्दोत्साहयोः । द्रेकते । दिद्रेके । द्रेकिता । द्रेकिष्यते । रेकृ, शङ्कायाम् । रेकते । सेकृ, स्रेकृ, स्रकि, श्रकि, श्लकि, गत्यर्थाः । सेकते, । सिसेके (२) । शकि, शङ्कायाम् । अकि, लक्षणे । अङ्कते । आनङ्के । वकि, कौटिल्ये । वङ्कते । मकि, मण्डने । मङ्कते । कक लौल्ये । ककते । चकके । कुक, वृक, आदाने । वर्कते ( ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन ) ववृके । चक, तृप्तौ प्रतीघाते च । चकते । चेके । ककि, वकि,

[ १ ] अवयवं करोतीत्यर्थः ।
[ २ ] अषोपदेशत्वान्न षः ।

श्वकि, त्रकि, ढौकृ, त्रौकृ, ष्वष्क, वष्क मष्क, टिकृ, टीकृ तिकृ, तीकृ, रघि, लघि, गत्यर्थाः । सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः ) ष्वष्कते । षष्वष्के । लघि, भोजननिवृत्तावपि । अघि, वघि, मघि, गत्याक्षेपे । अङ्घते । नानङ्घे । मघि कैतवे च । राघृ, लाघृ, द्राघृ, सामर्थ्ये । ध्राघृ, इत्यपि केचित् । द्राघृ, आयामे च । श्लाघृ, कत्थने । श्लाघते । अनुदात्तेतो द्विचत्वारिंशदात्मनेपदिनः समाप्ताः ।

अथ परस्मैपदिनः पञ्चाशत् । फक्क, नीचैर्गतौ । फक्कति । पफक्क । तक, हसने । तकति । तकि, कृच्छ्रजीवने । तङ्कति । बुक्क, भषणे । बुक्कति । कख, हसने । कखति । चकाख । ओखृ, राखृ, लाखृ, द्राखृ, ध्राखृ, शोषणालमर्थयोः । ओखति । ओखाञ्चकार । ओखिता । ओखिष्यति । ओखतु । औखत् । ओखेत् । ओख्यात् । औखीत् । औखिष्यत् । शाखृ, श्लाखृ, व्याप्तौ । उख, उखि, वख, वखि, मख, मखि, णख, णखि, रख, रखि, लख, लखि, इख, इखि, ईखि, वल्ग, रगि, लगि, अगि, वगि, मगि, तगि, त्वगि, श्रगि, श्लगि, इगि, रिगि, लिगि, गत्यर्थाः । रिख-त्रख-त्रिखि-शिखि इत्यपि चतुरः केचित्पठन्ति । ओखति ।

## अभ्यासस्यासवर्णे[1] ॥ ६ । ४ । ७८ ॥

अभ्यासस्येवर्णोवर्णान्तस्याऽसवर्णेऽचि परत इयङ् उवङ् इत्येतावादेशौ भवतः । उवोख (२) । ऊखतुः । ऊखुः । ओखिता । ओखिष्यति । ओखतु । औखत् । ओखेत् । उख्यात् । औखीत् । औखिष्यत् । उङ्खति । उङ्खाञ्चकार । त्वगि, कम्पने । युगि, जुगि, बुगि, वर्जने । युङ्गति । घघ, हसने । मघि, मण्डने ।

---

[१] वार्णादाङ्गं बलीय इति ज्ञापनार्थमेवासवर्णग्रहणमिति केचित् ।

[२] सन्निपातपरिभाषया इजादेरित्याम्न ।

शिघि आघ्राणे। शिङ्घति। इति फक्कादय उदात्ता उदात्तेतः पञ्चाशत् समाप्ताः।

अथ चवर्गीयान्तास्त्रिनवतिः। वर्च, दीप्तौ। वर्चते। वर्चताम्। सच, सेचने सेवने च। सचते। सेचे। सचिता। सचिष्यते। लोचृ, दर्शने। लोचते। लुलोचे। शच, व्यक्तायां वाचि। शेचे। श्वच, श्वचि, गतौ। श्वचते। श्वञ्चते। कच, बन्धने। कचि, काचि, दीप्तिबन्धनयोः। मच, मुचि, कल्कने। मेचे। मुमुञ्चे। मचि, धारणोच्छ्रायपूजनेषु। ममञ्चे। पचि, व्यक्तीकरणे। पञ्चते। ष्टुच, प्रसादे। स्तोचते। तुष्टुचे। ऋज, गतिस्थानार्जनोपार्जनेषु। अर्जते, आनृजे। ऋजि, भृजी, भर्जने। ऋञ्जते। ऋञ्जाञ्चक्रे। आञ्जिष्ट। भर्जते। बभृजे। अभर्जिष्ट। एजृ, भ्रेजृ, भ्राजृ, दीप्तौ। एजाञ्चक्रे। ईज, गतिकुत्सनयोः। ईजाञ्चक्रे। ईजाम्बभूव। ईजामास। वर्चादय उदात्ता अनुदात्तेत एकविंशतिः समाप्ताः।

अथ द्विसप्ततिर्व्रजयन्ताः परस्मैपदिनः। शुच, शोके। शोचति। कुच, शब्दे तारे। कोचति। कुञ्च, क्रुञ्च, कौटिल्याल्पीभावयोः। कुञ्चति। क्रुञ्चति। कुच्यात्। [1] क्रुञ्च्यात्। लुञ्च, अपनयने। लुच्यात्। अञ्चु गतिपूजनयोः। अच्यात्। पूजार्थे-अञ्च्यात्। वञ्चु, चञ्चु, तञ्चु, त्वञ्चु, म्रुञ्चु, म्लुञ्चु, म्रुचु, म्लुचु गत्यर्थाः। वच्यात्। चच्यात्। तच्यात्। त्वच्यात्। म्रुच्यात्। म्लुच्यात्।

जॄस्तम्भु[2]म्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ३ । १ । ५८ ॥

---

[ १ ] क्रुञ्चेर्नलोपाऽभावो निपातनादितिमते रूपमिदम्। क्विन्प्रत्यय एव निपानमितिमतेतु क्रुच्यात्।

[ २ ] स्तम्भुः सौत्रः।

एतेभ्यो धातुभ्यः परस्य च्लेरङादेशो भवति । अम्रुचत् । अम्रोचीत् । अम्लुचत् । अम्लोचीत् । ग्रुचु, ग्लुचु, कुजु, खुजु, स्तेयकरणे । जुग्रोच । अग्रुचत् । अग्रोचीत् । जुग्लोच । अग्लुचत् । अग्लोचीत् । अकोजीत् । अखोजीत् । ग्लुञ्चु, षस्ज गतौ । अग्लुचत् । अग्लुञ्चीत् । सज्जति (१) । गुजि, अव्यक्ते शब्दे । गुञ्जति । जुगुञ्ज । गुञ्ज्यात् । अगुञ्जीत् । अगुञ्जिष्यत् । अर्च पूजायाम् । अर्चति । आनर्च । अर्चिषति । अर्चिषाति । म्लेच्छ अव्यक्ते शब्दे । म्लेच्छति । मिम्लेच्छ । लच्छ, लाछि, लक्षणे । लच्छति । ललच्छ । लाञ्छति । ललाञ्छ । वाछि, इच्छायाम् । वाञ्छति । आछि, आयामे । आञ्छति । आनञ्छ ( २ ) । ह्रीच्छ, लज्जायाम् । ह्रीच्छति । जिह्रीच्छ । हुर्छा, कौटिल्ये । उपधायाञ्चेति । दीर्घः । हूर्छति । मुर्छा, मोहसमुच्छ्राययोः । मूर्छति । स्फुर्छा, विस्तृतौ । स्फूर्छति । युच्छ, प्रमादे । युच्छति । उछि, उञ्छे । उञ्छति । उञ्छांचकार । उच्छी, विवासे । विवासः समाप्तिः । व्युच्छति । ध्रज, ध्रजि, धृज, धृजि, ध्वज, ध्वजि, गतौ । ध्रजति । ध्रञ्जति । धर्जति । धृञ्जति । ध्वजति । ध्वञ्जति । कूज, अव्यक्ते शब्दे । कूजति अर्ज, षर्ज, अर्जने । अर्जति । आनर्ज । सर्जति ससर्ज । गर्ज, शब्दे । गर्जति । तर्ज, भर्त्सने । तर्जति । कर्ज, व्यथने । खर्ज, पूजने । चखर्ज । अज, गतिक्षेपणयोः । अजति ।

## अजेर्व्यघञपोः ॥ २ । ४ । ५६ ॥

अजे र्धातो र्वीत्ययमादेशो भवत्यार्धधातुके परतो घञपौ वर्जयित्वा । ( वलादावार्धधातुके वेष्यते ) विवाय । विव्यतुः । विव्युः । एरनेकाचइति-यण् । थलि एकाच इतीण्निषेधे प्राप्ते ।

---

[ १ ] अयमात्मनेपद्यपीति केचित् ।

[ २ ] अत आदेरित्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थम् । तेन दीर्घाभावान्न नुट् । तपरकरणं मुखसुखार्थमिति मते तु नुट्-आनाञ्छ ।

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ ७ । २ । १३ ॥

कृ सृ भृ वृ स्तु द्रु स्रु श्रु इत्येतेषां लिटि प्रत्यय इडागमो न भवति । क्रादीनां चतुर्णां ग्रहणं नियमार्थम् । प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्णिषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्य इति । ततश्चतुर्णां थलि भारद्वाज-नियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम् ।

## अचस्तास्वत्थल्यनिटो नित्यम् ॥ ७ । २ । १३ ॥

तासौ ये नित्यानिटो धातवोऽजन्तास्तेभ्य स्तासाविव थलीडागमो न भवति ।

## उपदेशेऽत्वतः ॥ ७ । २ । ६२ ॥

उपदेशे योधातुरकारवान् तासौ नित्यानिट् तस्मात्तासाविव थलीडागमो न भवति ।

## ऋतो भारद्वाजस्य ॥ ७ । २ । ७३ ॥

ऋकारान्ताद्धातोर्भारद्वाजस्याचार्यस्य मतेन तासाविव नित्यानिटस्थ-लिइडागमो न भवति । तेनान्यस्य स्यादेव विवयिथ । विवेथ । आजिथ । वेता । अजिता । वेष्यति । अजिष्यति । अजतु । आजत् । अजेत् । वीयात् ।

## सिचि वृद्धिः परस्मैपदेषु ॥ ७ । २ । १ ॥

परस्मैपदपरे सिचि परत इगन्ताङ्गस्य वृद्धिर्भवति । अवैषीत् । आजीत् । अवेष्यत् । आजिष्यत् । तेज, पालने । तेजति । खज, मन्थे । खजति । खजि, गतिवैकल्ये । खञ्जति । एजृ, कम्पने । एजति । एजाञ्चकार । टुओस्फूर्जा, वज्रनिर्घोषे । स्फूर्जति । पुस्फूर्ज । क्षि, क्षये । क्षयति । चिक्षाय । इयङ् , चिक्षियतुः । चिक्षियुः । चिक्षयिथ । चिक्षेथ । क्षेता ।

## अकृत्सार्वधातुकयोर्दीर्घः ॥ ७ । ४ । २५ ॥

अकृद्यकारे असार्वधातुकयकारे च क्ङिति परतोऽजन्तस्याङ्गस्य दीर्घो भवति । चीयात् । अचैषीत् । चीज, अव्यक्ते शब्दे । चिचीज । लज, लजि, भर्जने । लाज, लाजि, भर्त्सने च । जज, जजि, युद्धे । तुज, हिंसायाम् । तोजति । तुतोज । तुजि, पालने । गज, गजि, गृज, गृजि, मुज, मुजि, शब्दार्थाः । गज मदने च । वज, व्रज, गतौ । वदव्रजेति वृद्धिः । अव्राजीत् । इति शुचादय उदात्ता त्त्विवर्ज उदात्तेतः परस्मैपदिनः समाप्ताः ।

अथ टवर्गीयान्ता द्वाविंशत्यधिकं शतम् । अट्ट, अतिक्रमणहिंसनयोः । दोपधस्तोपधो वा । अट्टते । आनट्टे । वेष्ट, वेष्टने । वेष्टते । विवेष्टे । चेष्ट, चेष्टायाम् । चेष्टते । चिचेष्टे । अचेष्टिष्ट । गोष्ट, लोष्ट सङ्घाते । जुगोष्टे । लुलोष्टे । घट्ट चलने । घट्टते । जघट्टे । स्फुट, विकसने । स्फोटते । पुस्फुटे । अठि गतौ । अण्ठते । आनण्ठे । वठि, एकचर्य्यायाम् । वण्ठते । ववण्ठे । मठि, कठि, शोके । शोक इहाऽऽध्यानम् । मण्ठते । ममण्ठे । कण्ठते । चकण्ठे । मुठि, पालने । मुण्ठते । हेठ, विबाधायाम् । हेठते । जिहेठे । एठ, च । एठते । एठाञ्चक्रे । हिडि, गत्यनादरयोः । हिण्डते । जिहिण्डे । हुडि, सङ्घाते । हुण्डते । जुहुण्डे । कुडि, दाहे । वडि, विभाजने । मडि, च । भडि परिभाषणे (१) । बभण्डे । पिडि, सङ्घाते । पिपिण्डे । मुडि, मार्जने । न्यग्भावोऽपि मार्जनम् । तुडि, तोडने । हुडि, वरणे । वरणं स्वीकारः । चडि, कोपे । चण्डते । शडि, रुजायां संघाते च । तडि, ताडने । पडि, गतौ । कडि, मदे । खडि मन्थे । हेड़, होड़, अनादरे । बाड़, आप्लाव्ये । आप्लाव्यमाप्लावः । द्राड़, धाड़, विशरणे । शाड़, श्लाघायाम् । शाडते । डलयोरभेदात् शालते इत्यपि । इत्यट्टादय उदात्ता अनुदात्तेतः षट्त्रिंशत् समाप्ताः । शौट़, गर्वे । शौटति । शुशौट । यौट़, बन्धे ।

---

[ १ ] परिहासः सनिन्दोपालम्भश्च परिभाषणम् ।

यौटति। म्लेटृ, म्रेडृ, उन्मादे। म्लेटति। म्रेडति। कटे, वर्षावरणयोः। चट इत्येके। चकाट। कट्यात्। अतोहलादेरितिवृद्धौ प्राप्तायाम्—

ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥ ७।२।५॥

हकारान्तानां मकारान्तानां यकारान्तानामङ्गानां क्षण श्वस जागृ णि श्वि इत्येतेषामेदितां च इडादौ सिचि परस्मैपदे परतो वृद्धिर्न भवति।

अकटीत्। अकटिष्यत्। अट, पट, गतौ। आट। आटतुः। आटुः। पपाट। पेटतुः। पेटुः। रट, परिभाषणे। रराट। लट, बाल्ये। ललाट। शट, रुजाविशरणगत्यवसादनेषु। शशाट। वट, वेष्टने। ववाट। ववटतुः। किट, खिट, त्रासे। शिट, षिट, अनादरे। जट, झट, संघाते। भट, भृतौ। तट, उच्छ्राये। खट, काङ्क्षायाम्। नट, नृत्तौ। पिट, शब्द संघातयोः। हट, दीप्तौ। पट, अवयवे। लुट, विलोडने। डान्तोऽयमित्येके। चिट, परप्रेष्ये। विट, शब्दे। विट, आक्रोशे। हिट, इत्येके। इट, किट, कटी (१) गतौ। एटति। मडि, भूषायाम्। कुडि, वैकल्ये। मुड, प्रुड, मर्दने। चुडि, अल्पीभावे। चुण्डति। चुचुण्ड। मुडि, खण्डने। पुडि, चेत्येके। रुटि, लुटि, स्तेये। रुठि, लुठि, इत्येके। रुडि लुडि इत्यपरे। स्फुटिर, विशरणे। स्फुटि-इत्यपि केचित्। पठ, व्यक्तायां वाचि। पेठतुः। पेठिथ। अपठीत्। अपाठीत्। वठ, स्थौल्ये। ववठतुः। ववठिथ। मठ, मदनिवासयोः। कठ, कृच्छ्रजीवने। रट, परिभाषणे। रठ, इत्येके। हठ, प्लुतिशठत्वयोः। बलात्कार, इत्येके। हठति। जहाठ। रुठ, लुठ, उठ, उपघाते। ओठति। ऊठेत्येके। ऊठति। ऊठाञ्चकार। पिठ, हिंसासङ्क्लेशनयोः। शठ, कैतवे च। शुठ, प्रतीघाते। शुठि, इत्येके। कुठि, च। कुण्ठति। लुठि, आलस्ये प्रतिघाते च। शुठि, शोषणे। रुठि, लुठि, गतौ। चुड्ड, भावकरणे। भावकरणमभिप्रायाविष्करणम्। चुड्डति। चुचुड्ड। अड्ड,

[१] अन्ते च इ ई इति प्रश्लेषाद्-अयति। इयाय। अयाञ्चकारेत्याद्यपि।

अभियोगे। अड्डति। आनड्ड। कड्ड, कार्कश्ये। कड्डति। चुड्डादयो दोपधाः। क्रीडृ, विहारे। चिक्रीड। तुडृ, तोडने। तूडृ, इत्येके। हुडृ, हूडृ, होडृ गतौ। हुड्यात्। हूड्यात् होड्यात्। रौडृ, अनादरे। रोडृ, लोडृ, उन्मादे। अड, उद्यमे। लड, विलासे। लल इत्येके। कड, मदे। कडि, इत्येके। गडि, वदनैकदेशे। गण्डति। इति शौडादय उदात्ता उदात्तेतः षडशीतिः परस्मैपदिनः। अथ पवर्गीयान्ताः। तत्रानुदात्तेतः- स्तोभत्यन्ताश्चतुस्त्रिंशत्। तिपृ, तेपृ, ष्टिपृ ष्टेपृ क्षरणार्थाः। आद्योऽनुदात्तः। तेपते। तितिपे। क्रादिनियमादिट्। तितिपिषे। तेप्ता। तेप्स्यते।

## लिङ्सिचावात्मनेपदेषु ॥ १ । २ । ११ ॥

इक्समीपाद्धलः परौ झलादी लिङ्सिचौ आत्मनेपदेषु परतः कितौ भवतः। तिप्सीष्ट। अतिप्त। अतिप्साताम्। अतिप्सत। तेपते। तितेपे। तिष्टिपे। तिष्टिपाते। तिष्टिपिरे। तेपृ, कम्पने च। ग्लेपृ दैन्ये। ग्लेपते। जिग्लेपे। टुवेपृ, कम्पने वेपते। केपृ, गेपृ, ग्लेपृ च। चात्कम्पने गतौ च। मेपृ, रेपृ, लेपृ, गतौ। त्रपूष्, लज्जायाम्। त्रपते। त्रेपे। त्रपन्ते।

## तॄफलभजत्रपश्च ॥ ६ । ४ । १२२ ॥

तॄ फल भज त्रप इत्येतेषामङ्गानामत एकारादेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि। त्रेपे। त्रेपाते। त्रेपिरे। ऊदित्वादिड्वा। त्रपिता। त्रप्ता। त्रपिपीष्ट। त्रप्सीष्ट। कपि, चलने। कम्पते। चकम्पे। रबि, लबि, अबि, शब्दे। ररम्बे। ललम्बे। आनम्बे। लबि, अवस्रंसने च। कबृ, वर्णे। चकबे। क्लीबृ, अधाष्र्ट्ये। चिक्लीबे। क्षीबृ, मदे। क्षीबते। शीभृ, कत्थने। चीभृ च। रेभृ, शब्दे। अभि, रभि, इत्येके। ष्टभि, स्कभि, प्रतिबन्धे। स्तम्भते। उत्तम्भते(१)। जभी, जृभि, गात्रविनामे।

[ १ ] उदः स्थास्तम्भोरितिपूर्वसवर्णः।

## रधिजभोरचि ॥ ७ । १ । ६१ ॥

रधि जभी इत्येतयोरजादौ प्रत्यये नुमागमो भवति । जम्भते । जजम्भे । जम्भिता । अजम्भिष्ट । जृम्भते जजृम्भे । शल्भ, कत्थने । शल्भते । शशल्भे । वल्भ, भोजने । ववल्भे । गल्भ, धार्ष्ट्यें । गल्भते । स्रम्भु, प्रमादे । स्रम्भते । सस्रम्भे । दन्त्यादिस्तालव्यादिश्च । श्रम्भते । ष्टुभु, स्तम्भे । स्तोभते । तुष्टुभे । अस्तोभिष्ट । इति । अथ परस्मैपदिनः । गुपू, रक्षणे ।

## गुपूधूपविच्छिपणिपनिभ्य आयः ॥ ३ । १ । २८ ॥

गुपूरक्षणे धूपसंतापे, विच्छगतौ, पण व्यवहारेस्तुतौ च, पन च इत्येतेभ्यो धातुभ्य आय प्रत्ययो भवति स्वार्थे । पुगन्तेति गुणः ।

## सनाद्यन्ताधातवः ॥ ३ । १ । ३२ ॥

सन् आदिर्येषां ते सनादयः । सनादयोऽन्तेयेषां ते सनाद्यन्ताः । सनाद्यन्ताः समुदाया धातुसंज्ञा भवन्ति । धातुत्वाल्लडादयः । गोपायति ।

## आयादय आर्द्धधातुके वा ॥ ३ । १ । ३१ ॥

आर्द्धधातुक विषये आयादयः प्रत्यया वा भवन्ति ।

## कास्प्रत्ययादाममन्त्रे लिटि ॥ ३ । १ । ३५ ॥

कासृशब्दकुत्सायाम् , ततः प्रत्ययान्तेभ्यश्च धातुभ्य आम् प्रत्ययो भवति लिटिपरतोऽमन्त्रविषये । ( कास्यनेकाज्ग्रहणं कर्तव्यम् ) सूत्रे प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमिति प्राञ्चः ।

---

[१] सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विप्णिज्यङौ तथा ।
यगाययङ्णिङश्चेति द्वादशामी सनादयः ॥

## आर्द्धधातुके ॥ ६ । ४ । ४६ ॥

आर्द्धधातुक इत्यधिकारोन ल्यपीतिप्रागेतस्माद्ध यदित ऊर्ध्वमनुक्र मिष्याम आर्धधातुक इत्येव तद्वदितव्यम् ।

## अतो लोपः ॥ ६ । ४ । ४८ ॥

आर्द्धधातुकोपदेशकाले यदकारान्तं तस्याकारस्य लोप आर्द्धधातुके । गोपायाञ्चकार । गोपायाम्बभूव । गोपायामास । जुगोप । जुगुपतुः । जुगुपुः । ऊदित्वाद्वेट् । जुगोपिथ । जुगोप्थ । गोपायिता । गोपिता । गोप्ता । गोपायिष्यति । गोपिष्यति । गोप्स्यति । गोपाय्यात् । गुप्यात् । अगोपायीत् । अगोपीत् । अगौप्सीत् । धूप, सन्तापे धूपायति । धूपायाञ्चकार । दुधूप । धूपायिता । धूपिता । जप, जल्प, व्यक्तायांवाचि । जपति । जल्पति । जप, मानसेच । चप, सान्त्वने । षप, समवाये । समवायः सम्बन्धः सम्यगवबोधोवा । सपति । रप, लप, व्यक्तायां वाचि । रपति । लपति । चुप, मन्दायां गतौ । चोपति । चुचोप । तुप, तुम्प, त्रुप, त्रुम्प, तुफ, तुम्फ त्रुफ, त्रुम्फ, हिंसार्थाः तोपति । तुतोप । तुम्पति । तुतुम्प । तुतुम्पतुः । तुम्पिता । तुम्पिष्यति । तुम्पतु । अतुम्पत् । तुप्यात् । "प्रात्तुम्पतौ गवि कर्तरि" इति पारस्करादिगणे पाठात्सुट् । प्रस्तुम्पति गौः । शितपा निर्देशाद्यङ्लुकि न[1] । प्रतोतुम्पीति । त्रोपति । त्रुम्पति । तोफति । तुम्फति । पर्प, रफ, रफि, अर्ब, पर्ब, लर्ब, बर्ब, मर्ब, कर्ब, खर्ब, गर्ब, शर्ब, षर्ब, चर्ब, गतौ । चर्ब, अदने । पर्पति । पपर्प । रफति रम्फति । अर्बति । आनर्ब । पर्बति । लर्बति । बर्बति । मर्बति । कर्बतीत्यादयः । कुबि, आच्छादने । कुम्बति । लुबि, तुबि, अर्दने । लुम्बति । तुम्बति । चुबि, वक्त्रसंयोगे । चुम्बति । षृभु, षृम्भु, हिंसार्थौ । सर्भति । ससर्भ । सर्भिता सृम्भति । ससृम्भ । सृभ्यात् । षिभु, षिम्भु इत्येके ।

---

[१] भाष्ये "शितपाशपे" ति परिभाषानोपलभ्यते ।

सेभति । सिम्भति । शुभ, शुम्भ, भाषणे । भासनेइत्येके । हिंसायामित्यन्ये । अथानुनासिकान्ताः कम्वन्ता अनुदात्तेतो दश । घिणि, घुणि, घृणि, ग्रहणे । नुम् । धुत्वम् । घिण्णते । घिण्णेते । घिण्णन्ते । जिघिण्णे । घुण्णते । जुघुण्णे । घृण्णते । जघृण्णे । घुण, घूर्ण, भ्रमणे । घुणते । घूर्णते । पण, व्यवहारे स्तुतौ च । पन, च । स्तुतावित्येव संबध्यते । पृथङ्निर्देशात् । पनिसाहचर्य्यात्पणेरपि स्तुतावेवायप्रत्ययः । व्यवहारे तु पणते । पणितेत्यादि । स्तुतावनुबन्धस्य केवलेचरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदम् । पणायति । पणायाञ्चकार । पेणे । पणायितासि । पणितासे । पणाय्यात् । पनायति । पनायाञ्चकार । पेने । भाम, क्रोधे । भामते । बभामे । क्षमूष्, सहने । क्षमते । चक्षमे । चक्षमिषे । चक्षंसे । चक्षमिध्वे । चक्षन्ध्वे । चक्षमिवहे ।

## म्वोश्च ॥ ८ । २ । ६५ ॥

मकारवकारयोश्चपरतोमकारान्तस्य धातोर्नकारादेशो भवति । चक्षण्वहे ।चक्षमिमहे । चक्षण्महे । क्षमिष्यते । क्षंस्यते । क्षमेत । क्षमिषीष्ट । क्षंसीष्ट । अक्षमिष्ट । अक्षंस्त । कमु, कान्तौ । कान्तिरिच्छा ।

## कमेर्णिङ् ॥ ३ । १ ३० ॥

कमेर्धातोर्णिङ् प्रत्ययो भवति स्वार्थे । ङित्वात्तङ् । कामयते ।

## अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ६ ४ । ५५ ॥

आम्, अन्त, आलु, आय्य इत्नु, इष्णु, इत्येतेषु परतो णेरयादेशो भवति । णेरनिटीत्यस्यापवादः । कामयाञ्चक्रे । कामयाम्बभूव । कामयामास । आयादयआर्द्धधातुके वा । चकमे । कामयिता । कमिता । कामयिष्यते । कमिष्यते । कामयताम् । कामयेत । अकामयत । कामयिषीष्ट । कमिषीष्ट ।

## णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥ ३ । १ । ४८ ॥

ण्यन्तेभ्यो धातुभ्यः श्रि द्रु, स्रु इत्येतेभ्यश्च परस्य च्लेश्चङादेशो भवति कर्तृवाचिनि लुङि परतः ।

## णेरनिटि ॥ ६ । ४ । ५१ ॥

अनिडादावार्द्धधातुके णेर्लोपो, भवति । परत्वादेरनेकाच इति यणिप्राप्ते । ( ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन भवतः ) णिलोपस्य तु पाचयतेः पाक्तिरित्यादौ क्तिजन्तमवकाशः । वस्तुतस्तु अनि- टीतिवचनसामर्थ्यादार्द्धधातुकमात्रमस्य विषयः । तथाचेयङादेरपवाद एवायम् । अततक्षत् । आटिटत् । कारणा । कारकः । कार्यते ।

## णौ चङ्युपधाया ह्रस्वः ॥ ७ । ४ । १ ॥

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वो भवति ।

## चङि ॥ ६ । १ । ११ ॥

चङिपरतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगंद्वेभवतः ।

## सन्वल्लघुनि चङ्परेऽनग्लोपे ॥ ७ ४ । ९३ ॥

लघुनि धात्वक्षरे परतो योऽभ्यास स्तस्य चङ्परे णौ परतः सनीव कार्यं भवति अनग्लोपे ।

## सन्यतः ॥ ७ । ४ । ७९ ॥

सनिपरतोऽकारान्ताभ्यासस्येकारादेशो भवति ।

## दीर्घो लघोः ॥ ७ । ४ । ९४ ॥

दीर्घो भवति लघोरभ्यासस्य लघुनि णौ चङ्परेऽनग्लोपे। अचीकमत। अचीकमेताम्। अचीकमन्त । (णिङभावपक्षे कमेश्च्लेश्चङ् वक्तव्यः) अचकमत । अचकमेताम्। अचकमन्त। अकामयिष्यत । अकमिष्यत । इतिणिगादय उदात्ता अनुदात्तेत आत्मनेभाषा दश समाप्ताः । अथ त्रिंशत्परस्मैपदिनः । अण, रण, वण, भण, मण, कण, क्वण, व्रण, भ्रण, ध्वण, शब्दार्थाः । अणति रणति । वणति । वकारादित्वा-देत्वाभ्यासलोपौ न ववणतुः । ववणिथ । धण, इत्येके । धणति । ओणृ, अपनयने । ओणति । ओणाञ्चकार । शोणृ, वर्णगत्योः । शोणति। शुशोण । श्रोणृ, संघाते । श्रोणति । श्लोणृ, च । पैणृ, गतिप्रेरणश्लेषणेषु। पैणति । पिपैण । ध्रण, शब्दे । उपदेशे नान्तोऽयम्। यङ्लुकि दन्ध्रन्ति । ध्रणति । बणेत्यपिकेचित् । बणति । बबाण । बेणतुः । कनी, दीप्तिकान्ति गतिषु । चकान । ष्टन, वन शब्दे । स्तनति। वनति । वन, षण, सम्भक्तौ । वनेरर्थभेदात्पुनः पाठः । सनति । ससान । सेनतुः ।

## ये विभाषा ॥ ६ । ४ । ४३ ॥

यकारादौ क्ङिति प्रत्यये परतो जनसनखनामाकारादेशो भवति विभाषा । सायात् । सन्यात्। असानीत् । असनिष्यत् । अम, गत्यादिषु। अमति । आम । द्रम, हम्म, मीमृ, गतौ । द्रमति । दद्राम । हम्यन्तेति न वृद्धिः । अद्रमीत् । हम्मति । जहम्म । मीमति । मिमीम । अयं शब्देच । चमु, छमु, जमु, झमु, अदने ।

## ष्ठिवुक्लमुचमां शिति ॥ ७ । ३ । ७५ ॥

---

[ १ ] कनी दीप्तिकान्तित्यत्र गतेः परयोः शब्दसंभक्त्योरादिशब्देन संग्रहः ।

ष्ठिवु क्लमु चम् इत्येतेषां दीर्घो भवति शिति परतः। ( दीर्घत्वमाङि चम इति वक्तव्यम् ) आचामति । आङि किम् । चमति । विचमति । अचमीत् । जिमु, इत्येके । जेमति जिजेम । क्रमु, पादविक्षेपे ।

## (१) वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ॥ ३ । १ । ७० ॥

एतेभ्यो वा श्यन् प्रत्ययो भवति कर्त्रर्थे सार्वधातुके ।

## क्रमः परस्मैपदेषु ॥ ७ । ३ । ७६ ॥

क्रमः परस्मैपदपरे शिति परतो दीर्घो भवति। क्राम्यति । क्रामति । चक्राम । क्राम्यतु । क्रामतु । परस्मैपदे किम् । उपक्रमते ।

## स्नुक्रमोरनात्मनेपदनिमित्ते (२) ॥ ७ । २ । ३६ ॥

स्नुक्रमोरार्धधातुकस्य वलादेरिडागमो भवति, न चेत्स्नुक्रमौ आत्मनेपदस्य निमित्तं भवतः । अक्रमीत् । अक्रमिष्यत् । इत्यणादय उदात्ता उदात्तेतस्त्रिंशत्परस्मैभाषाः समाप्ताः । अथ रेवत्यन्ता अनुदात्तेतः । अय, वय, पय, मय, चय, तय, णय, गतौ । अयते ।

## दयायासश्च ॥ ३ । १ । ३७ ॥

दय् , अय् , आस् , एतेभ्यश्च लिटि परत आम् प्रत्ययो भवति । अयाञ्चक्रे । अयेत । अयिषीष्ट ।

---

[ १ ] उभयत्र विभाषेयम् । भ्रमिक्लमित्रसिभ्यो नित्यं प्राप्ते इतरेषामप्राप्ते चारम्भात् ।

[ २ ] आत्मनेपदनिमित्ताभावे इत्यर्थः ।

## विभाषेटः ॥ ८ । ३ । ७९ ॥

इणः परस्मादिट उत्तरेषां षीध्वंलुङ्लिटां यो धकार स्तस्य मूर्धन्यादेशो भवति विभाषा । अयिषीढ्वम् । अयिषीध्वम् । आयिढ्ढ । आयिढ्वम् । आयिध्वम् ।

## उपसर्गस्यायतौ ॥ ८ । २ । १९ ॥

अयतौ परत उपसर्गस्य यो रेफस्तस्य लकार आदेशो भवति । प्लायते । पलायते । निरदुसोरुत्वस्यासिद्धत्वान्न लत्वम् । निरयते । दुरयते । निरदुरोस्तु । निलयते । दुलयते । वयते । वयिषीढ्वम् । वयिषीध्वम् । दय, दानगतिरक्षणहिंसाऽऽदानेषु । आदानं ग्रहणम् । दयते । दयाञ्चक्रे । रय, गतौ । रयते । रेये । ऊयी, तन्तुसन्ताने । ऊयाञ्चक्रे । पूयी, विशरणे दुर्गन्धे च । पूयते । पुपूये । क्नूयी, शब्दे, उन्दे च । क्नूयते । चुक्नूये । क्ष्मायी, विधूनने । चक्ष्माये । स्फायी, ओप्यायी, वृद्धौ । स्फायते । पस्फाये । प्यायते ।

## लिड्यङोश्च ॥ ६ । १ । २९ ॥

लिटि यङि च प्यायः पीभावः । पुनः प्रसङ्गविज्ञानात् पीशब्दस्य द्वित्वम् । पिप्ये । पिप्याते । पिप्यिरे ।

## दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ॥ ३ । १ । ६१ ॥

एतेभ्यः परस्य च्लेस्तशब्दे परतोऽन्यतरस्यां चिणादेशो भवति ।

## चिणो लुक् ॥ ६ । ४ । १०४ ॥

चिणः परस्य प्रत्ययस्य लुक् । इति तकारस्य लोपः । अप्यायि । अप्यायिष्ट । तायृ, सन्तानपालनयोः । सन्तानः प्रबन्धः । तायते । तताये अतायि । अतायिष्ट । शल, चलनसंवरणयोः । वल, वल्ल, सम्वरणे

सञ्चरणे च । वलते । वल्लते । ववले । ववल्ले । मल, मल्ल, धारणे । मलते । मल्लते । भल, भल्ल, परिभाषणहिंसाऽऽदानेषु । भलते । भल्लते । बभले । बभल्ले । कल, शब्दसंख्यानयोः । कलते । चकले । कल्ल, अव्यक्ते शब्दे । कल्लते । तेवृ, देवृ, देवने । तितेवे । दिदेवे । षेवृ, गेवृ, ग्लेवृ, पेवृ, मेवृ, म्लेवृ, सेवने । सेवते । सिषेवे । गेवते । जिगेवे । जिग्लेवे । पिपेवे । मेवते । म्लेवते । शेवृ, खेवृ, केवृ, इत्येके । रेवृ, प्लवगतौ । प्लवगतिः प्लुतगतिः । रेवते । इत्ययादय उदात्ता अनुदात्तेतआत्मनेभाषाः सप्तत्रिंशत्समाप्ताः ।

अथावत्यन्ताः परस्मैपदिनः । मव्य, बन्धने । मव्यति । ममव्य । सूर्क्ष्य, ईर्क्ष्य, ईर्ष्य, ईर्ष्यार्थाः । सूर्क्ष्यति । ईर्क्ष्यति । ईर्ष्यति । ईर्क्ष्याञ्चकारेत्यादि । हय, गतौ । हयति । जहाय । अहयीत् । यान्तत्वान्न वृद्धिः । शुच्य, अभिषवे । अवयवानां शिथिलीकरणं, सुरायाः सन्धानं वाऽभिषवः स्नानञ्च । शुशुच्य । चुच्य इत्येके । हर्य्य, गतिकान्त्योः । हर्य्यति । जहर्य्य । अल, भूषणपर्य्याप्तिवारणेषु । अलति । आल ।

## अतो ल्रान्तस्य ॥ ७ । २ । २ ॥

रेफलकारौ यावतः समीपौ तदन्ताङ्गस्य अत एव स्थाने वृद्धिर्भवति परस्मैपदे सिचि । नेटीति निषेधस्यातोहलादेर्लघोरिति विकल्पस्य चापवादः । माभवानालीत् । आलिष्टाम् । आलिषुः । ञिफला, विशरणे । फलति । पफाल । तृफलेत्येत्वम् । फेलतुः । फेलुः । अफालीत् । मील, श्मील, स्मील, क्ष्मील, निमेषणे । निमेषणमक्षिसङ्कोचः । मीलति । मिमील । पील, प्रतिष्टम्भे । प्रतिष्टम्भो रोधनम् । नील, वर्णे । निनील । शील, समाधौ । शीलति । कील, बन्धने । कीलति । चिकील । कूल, आवरणे । कूलति । शूल, रुजायां संघोषे च । तूल, निष्कर्षे । निष्कर्षो निष्कोषणम् । तच्चान्तर्गतस्य बहिर्निःसारणम् । तुतूल । शूल, संघाते । मूल, प्रतिष्ठायाम् ।

फल, निष्पत्तौ। फेलतुः। फेलुः। चुल्ल, भावकरणे। भावकरणमभिप्रायाविष्कारः। फुल्ल, विकसने। चिल्ल, शैथिल्ये, भावकरणे च। तिल, गतौ। तेलति। तिल्ल, इत्यन्ये। तिल्लति। वेलृ, चेलृ, केलृ, खेलृ, क्ष्वेलृ, वेल्ल, चलने। पञ्च ऋदितः। षष्ठोलोपधः। पेलृ, फेलृ, शेलृ, गतौ। षेलृ, इत्येके। स्खल, सञ्चलने। चस्खाल। अस्खालीत्। खल, सञ्चये। गल, अदने। गलति। अगालीत्। षल, गतौ। सलति। दल, विशरणे। श्वल, श्वल्ल, आशुगमने। शश्वाल। अश्वालीत्। शश्वल्ल। अश्वल्लीत्। खोलृ, खोर्ऋ, गतिप्रतिघाते। खोलति। खोरति। धोर्ऋ, गतिचातुर्ये। धोरति। त्सर, छद्मगतौ। तत्सार। अत्सारीत्। क्मर, हूर्च्छने। चक्मार। अभ्र, वभ्र, मभ्र, चर, गत्यर्थाः। चर, भक्षणे च। ष्ठिवु, निरसने। ष्ठिवुक्लम्वितिदीर्घः। ष्ठीवति। तिष्ठेव। तिष्ठिवतुः। तिष्ठिवुः। द्वितीयष्ठकारोवा। टिष्ठेव। टिष्ठिवतुः। टिष्ठिवुः। हलिचेति दीर्घः। ष्ठीव्यात्। जि, जये। जयति। जयतः। जयन्ति।

## सँल्लिटोर्जेः॥ ७। ३। ५७॥

सनि लिटि च प्रत्यये जेरङ्गस्य योऽभ्यासस्तस्मादुत्तरस्य कवर्गादेशो भवति। जिगाय। जिग्यतुः। जिग्युः। जिगयिथ। जिगेथ। जिगाय। जिगय। जिग्यिव। जिग्यिम। जेता। जेष्यति। जयतु। अजयत्। जयेत्। जीयात्। अजैषीत्। अजेष्यत्। जीव, प्राणधारणे। जीवति। जिजीव। जीविष्यति। पीव, मीव, तीव, णीव, स्थौल्ये। पीवति। मीवति। तीवति। नीवति। क्षिवु, क्षेवु, निरसने। क्षेवति। चिक्षेव। उर्वी, तुर्वी, थुर्वी, दुर्वी, धुर्वी, हिंसार्थाः। उपधायाञ्चेति दीर्घः। ऊर्वति। ऊर्वाञ्चकार। ऊर्वाम्बभूव। ऊर्वामास। गुर्वी, उद्यमने। गूर्वति। जुगूर्व। मुर्वी, बन्धने। मूर्वति। मुमूर्व। पुर्व पर्व, मर्व, पूरणे। चर्व, अदने। भर्व, हिंसायाम्। कर्व, खर्व, गर्व, दर्पे। अर्व, शर्व षर्व, हिंसायाम्। अर्वति। आनर्व। शर्वति। सर्वति,।

इवि, व्याप्तौ । इन्वति । इन्वाञ्चकार । पिवि, मिवि, णिवि, सेचने । सेवने चेत्येके । पिन्वति । हिवि, दिवि, धिवि, जिवि, प्रीणनार्थाः । हिन्वति । दिन्वति ।

## धिन्विकृण्व्योर च ॥ ३ । १ । ८० ॥

धिन्वि कृण्वि इत्येतयोर्धात्वोरुप्रत्ययो भवत्यकारश्चान्तादेशः शब्विषये । अतोलोपः । स्थानिवत्त्वान्न लघूपधगुणः । धिनोति । धिनुतः । धिन्वन्ति ।

## लोपश्चास्यान्यतरस्यां म्वोः ॥ ६ । ४ । १०७ ॥

योऽयमुकारोऽसंयोगपूर्वस्तदन्तस्य प्रत्ययस्यान्यतरस्यां लोपो भवति वकार मकारादौ प्रत्यये परतः । धिन्वः । धिनुवः । धिन्मः धिनुमः । मिपि तु परत्वाद्गुणः । धिनोमि । धिनोतु । धिनुतात् । धिनुताम् । धिन्वन्तु ।

## उतश्च प्रत्ययादसंयोगपूर्वात् ॥ ६ । ४ । १०६ ॥

उकारो योऽसंयोगपूर्वस्तदन्तात्प्रत्ययादुत्तरस्य हेर्लुग्भवति । धिनु । धिनुतात् । धिनुतम् । धिनुत । धिनवानि । धिनवाव । धिनवाम । जिन्वति । रिवि, रवि, धवि, गत्यर्थाः । रिण्वसि । रण्वति । धन्वति । कृवि, हिंसाकरणयोश्च । चाद्गतौ । "ऋवर्णाच्चेतिवक्तव्यम्" इति णत्वे कृणोतीत्यादि धिनोतिवत् । मव, बन्धने । मवति । मेवतुः । मेवुः । अमवीत् । अमावीत् । अव, रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेश

---

[ १ ] चादुप्रत्ययः "तनादिकृञ्भ्यः" इति सूत्रादनुकृष्टः ।

[ २ ] यद्येवं तनु कुरु अत्र नप्राप्नोति उकारएवात्र प्रत्ययोनतदन्तः, अत्रापि तदन्तः, कथं, व्यपदेशिवद्भावात् ।

[ ३ ] नित्यत्वादुकारलोपात्पूर्वमाट् ।

श्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु । अवति। आव। अविता । अविष्यति । अवतु। आवत्। अवेत्। अव्यात्। आवीत्। आविष्यत्। इति मव्यादय उदात्ताउदात्तेतोजयति-वर्जं, परस्मैभाषाः। धावु, गतिशुद्ध्योः। उदात्तः स्वरितेदुभयतोभाषः। धावति। धावते। दधाव। दधावे। अथोष्मान्ता आत्मनेपदिन एकपञ्चाशत्। धुक्ष, धिक्ष, सन्दीपनक्लेशनजीवनेषु। धुक्षते। दिधिक्षे। वृक्ष, वरणे। वृक्षते। ववृक्षे। शिक्ष, विद्योपादाने। शिक्षते। भिक्ष, भिक्षायामलाभे लाभे च। भिक्षते। क्लेश, अव्यक्तायां वाचि। बाधन इत्यन्ये। क्लेशते। चिक्लेशे। दक्ष, वृद्धौ शीघ्रार्थे च। दक्षते। ददक्षे। दीक्ष, मौण्ड्येज्योपनयननियमव्रतादेशेषु। दीक्षते। दिदीक्षे। ईक्ष, दर्शने। ईक्षते। ईक्षाञ्चके। ईक्षाम्बभूव। ईक्षामास। ईष, गतिहिंसादर्शनेषु। ईषाञ्चक्रे। भाष, व्यक्तायां वाचि। भाषते। वर्ष, स्नेहने। वर्षते। ववर्षे। गेषृ, अन्विच्छायाम्। ग्लेषृ, इत्येके। गेषते। जिगेषे। ग्लेषते। जिग्लेषे। पेषृ, प्रयत्ने। पेषते। पिपेषे। जेषृ, णेषृ, एषृ, प्रेषृ, गतौ। जेषते। नेषते। एषते। एषाञ्चक्रे। प्रेषते। रेषृ, हेषृ, ह्रेषृ, अव्यक्ते शब्दे रेषते। रिरेषे। हेषते। जिहेषे। ह्रेषते। जिह्रेषे। कासृ, शब्दकुत्सायाम्। कासते। कासाञ्चक्रे। भासृ, दीप्तौ। भासते। बभासे। णासृ, रासृ, शब्दे। नासते। प्रणासते। रासते। णस, कौटिल्ये। नसते। नेसे। भ्यस, भये। भ्यसते। बभ्यसे। आङः शसि, इच्छायाम्। आशंसते। आशशंसे। ग्रसु, ग्लसु, अदने। जग्रसे। जग्लसे। ईह, चेष्टायाम्। ईहाञ्चक्रे। । बहि, महि, वृद्धौ। बंहते। ववंहे। मंहते। अहि, गतौ। अंहते। आनंहे। गर्ह, गल्ह, कुत्सायाम। गर्हते। गल्हते। जगर्हे। जगल्हे वर्ह, बल्ह, प्राधान्ये। वर्ह, वल्ह, परिभाषणहिंसाच्छादनेषु। दन्त्योष्ठ्यादी।

[१] अन्वेषण इत्यर्थः।

[२] कासृप्रत्ययादित्याम्।

केचित्तु पूर्वयोर्दन्त्योष्ठ्यादितामनयोरोष्ठ्यादिताञ्चाहुः। स्निह, गतौ। पिस्निहे। वेह, जेह, बाह, प्रयत्ने। जेहगतावपि। वेहते। जेहते। बाहते। बबाहे। द्राह, निद्राक्षये। निक्षेप इत्यन्ये। द्राहते। काशृ, दीप्तौ। काशते। चकाशे। ऊह, वितर्के। ऊहते। ऊहाञ्चक्रे। गाहू, विलोडने। गाहते। जगाहे। जगाहिषे। जघाक्षे। जगाहिढ्वे। जगाहिध्वे। जघाढ्वे। गाहिता।

## ढो ढे लोपः ॥ ८। ३। १३ ॥

ढस्य लोपो ढे। गाढा। गाहिष्यते। घाक्ष्यते। गाहिषीष्ट। घाक्षीष्ट। अगाहिष्ट। अगाढ[1]। अघाक्षाताम्। अघाक्षत। अगाढाः। अघाढ्वम्। अघाक्षि। अगाहिष्यत। अघाक्ष्यत। गृहू, गर्हणे। गर्हते। जगृहे। ( ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन ) जगृहिषे[2]। जघृक्षे। जगृहिढ्वे। गर्हिता। गर्ढा। गर्हिष्यते। घर्क्ष्यते। गर्हताम्। अगर्हत। गर्हेत। गर्हिषीष्ट। घृक्षीष्ट। अगर्हिष्ट। अनिट्पक्षे।

## शल इगुपधादनिटः क्सः ॥ ३। १। ४५ ॥

शलन्तो[3]यो धातुरिगुपध स्तस्मात्परस्य च्लेरनिटः क्स आदेशोभवति। अघृक्षत।

## क्सस्याचि ॥ ७। ३। ७२ ॥

क्सस्य अजादौ प्रत्यये लोपः। अघृक्षाताम्। अघृक्षन्त। अगर्हिष्यत अघर्क्ष्यत। ग्लह, च। ग्लहते। जग्लहे। घुषि, कान्तिकरणे। घष इति

---

[१] झलोझलोति सलोपः। ढत्वधत्वष्टुत्वढलोपाः।
[२] क्त्वात्परत्वात् "पुगन्त" इतिगुणे प्राप्तेऽस्माद्वार्तिकात् कित्वे गुणाभावः।
[३] धातोर्विशेषणादन्तलाभः, येन विधिस्तदन्तस्येति।

केचित् । घुंषते । जुघुंषे । घुंषिता । घुंषिष्यते । घुंषताम् । अघुंषत । घुंषेत । घुंषिषीष्ट । अघुंषिष्ट । अघुंषिष्यत । इति धुक्षादय उदात्ता अनुदात्तेतः ।

अथार्हत्यन्ताःपरस्मैपदिनो घसिवर्जमुदात्ताः । घुषिर्, अविशब्देन । विशब्दनं प्रतिज्ञानम् । घोषति । जुघोष । अघुषत् । अघोषीत् । अघोषिष्यत् । अक्षू, व्याप्तौ ।

## अक्षोऽन्यतरस्याम् ॥ ३ । १ । ७५ ॥

अस्मादन्यतरस्यांश्नुःप्रत्ययो भवति कर्त्रर्थे सार्वधातुके । पक्षे शप् । अक्ष्णोति । अक्ष्णुतः । अक्ष्णुवन्ति । अक्षति । अक्षतः । अक्षन्ति । आनक्ष । आनक्षिथ । इडभावपक्षे स्कोरिति कलोपे । आनष्ठ । अक्षिता । अष्टा । अक्षिष्यति । षढोः कसि । अक्ष्यति । अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात् । अक्ष्यात् । ऊदित्वाद्वेट्, नेटि । मा भवानक्षीत् । अक्षिष्टाम् । अक्षिषुः । इडभावे तु माभवानाक्षीत् । आष्टाम् । आक्षुः । तक्षू, त्वक्षू, तनूकरणे ।

## तनूकरणे तक्षः ॥ ३ । १ । ७६ ॥

अस्मात्तनुकरणे श्नुर्वा शब्विषये । तक्ष्णोति । तक्षति । ततक्षिथ । ततष्ठ । अतक्षीत् । अताक्षीत् । अताष्टाम् । तनूकरणे किम् ! वाग्भिः सन्तक्षति । भर्त्सयतीत्यर्थः । त्वक्षति । तत्वक्ष । उक्ष, सेचने । उक्षति । उक्षाञ्चकार । औक्षीत् । रक्ष, पालने । णिक्ष, चुम्बने । तृक्ष, स्तृक्ष, णक्ष, गतौ । तृक्षति । स्तृक्षति । नक्षति । वक्ष, रोषे । सङ्घात इत्यन्ये । मृक्ष, संघाते । म्रक्ष, इत्येके । तक्ष, त्वचने । त्वचनं संवरणम्, त्वचो ग्रहणञ्च । पक्ष, परिग्रह इत्येके । सूर्क्ष, आदरे । सुसूर्क्ष । काक्षि, वाक्षि, माक्षि, काङ्क्षायाम् । द्राक्षि, ध्राक्षि, ध्वाक्षि, घोरवासिते च । चूष, पाने ।

[ १ ] घोरवासितं घोरशब्दः ।

चुचूष । तूष, तुष्टौ । तूषति । तुतूष । पूष, वृद्धौ । मूष, स्तेये । लूष, रूष, भूषायाम् । शूष, प्रसवे । प्रसवोऽभ्यनुज्ञानम् । यूष, हिंसायाम् । जूष, च । भूष, अलङ्कारे । भूषति । ऊष, रुजायाम् । ऊषाञ्चकार । ईष, उञ्छे । कष, खष, शिष, जष, झष, शष, वष, मष, रुष, रिष, हिंसार्थाः । कषति । चकाष । चखाष । शिशेष । शिशेषिथ । शेष्टा । अशिक्षत् । अशेक्ष्यत् । जेषतुः । जझषतुः । शेषतुः । ववषतुः । मेषतुः ।

## तीषसहलुभरुषरिषः ॥ ७ । २ । ४८ ॥

तकारादावार्धधातुके इषु सह लुभ रुष रिष् इत्येतेभ्योवा इडागमो भवति । रोषिता । रोष्टा । रोषिष्यति । रेषिता । रेष्टा रेषिष्यति । भष, भर्त्सने । भषति । बभाष । उष, दाहे । ओषति ।

## उषविदजागृभ्योऽन्यतरस्याम् ॥ ३ । १ । ३८ ॥

एतेभ्योलिटिपरतोऽन्यतरस्यामाम् प्रत्ययो भवति । ओषाञ्चकार । उवोष[३] । ऊषतुः । उवोषिथ । औषीत् । औषिष्यत् । जिषु, विषु, मिषु, सेचने, । जेषति । जिजेष । वेषति । विवेष । विवेषिथ । विविषिव । वेष्टा । वेक्ष्यति । अविक्षत् । पुष, पुष्टौ । पोषति । पुपोष । पोषिता । पोषिष्यति । पोषतु । अपोषत् । पोषेत् । पुष्यात् । अपोषीत्[३] । अपोषिष्यत् । । श्रिषु, श्लिषु, प्रुषु, प्लुषु, दाहे । श्रेषति । शिश्रेष । श्रेषिता । श्लेषति । शिश्लेष । श्लेशिता । पुप्रोष । पुप्लोष । पृषु, वृषु, मृषु, सेचने । मृषु, सहने च । इतरौ हिंसासंक्लेशनयोश्च । पर्षति । पपर्ष । पृष्यात् । घृषु, संघर्षे । हृषु, अलीके । तुस, ह्रस, ह्लस, रस,

[ १ ] इहभर्त्सनं श्वरवः ।
[ २ ] 'पुगन्त'–इति गुणः । अभ्यासस्यावर्णे इत्युवङ् ।
[ ३ ] अनिट्केषु पुष्येतिश्यना निर्देशाद्दयं सेट् । अतो न क्सः । अङ् विधौ-दैवादिकस्य ग्रहणान्नाङ् ।

शब्दे। तुतोस। जहास। ररास। लस, श्लेषण क्रीडनयोः। घस्लृ, अदने। अयन्न सार्वत्रिकः। लिट्यन्यतरस्यामित्यदेर्घस्लादेशविधानात्। ततश्च यत्र लिङ्गं वचनं वा तत्रैवास्यप्रयोगः (१)।

## सः स्यार्द्धधातुके ॥ ७।४।४९ ॥

सकारान्तस्याङ्गस्य सकारादावार्द्धधातुके परतस्तकारादेशो भवति। घत्स्यति। घसतु। अघसत्। घसेत्।

## पुषादिद्युताद्य्लृदितः परस्मैपदेषु ॥ ३।१।५५ ॥

पुषादिभ्यो द्युतादिभ्यो लृदिद्भ्यो धातुभ्यः परस्य च्लेः परस्मैपदेषु परतोऽङादेशो भवति। अघसत्। अघत्स्यत्। जर्ज, चर्च, झर्झ, परिभाषणहिंसातर्जनेषु। पिसृ, पेसृ, गतौ। पेसति। पिपेस। पिपिसतुः। पिपेसतुः। हसे, हसने। हसति। एदित्वान्नवृद्धिः। अहसीत्। णिश समाधौ। नेशति। मिश, मश, शब्दे रोषकृते च। शव, गतौ। शवति। शशाव। शेवतुः। अशावीत्। अशवीत्। अशविष्यत्। शश, प्लुतगतौ। शशति। शशाश। शेशतुः। शेशुः। शेशिथ। शसु, हिंसायाम्। शसति। शशास। शशसतुः। नशसददेत्येत्वं न। शंसु, स्तुतौ। दुर्गतावपीति दुर्गः। शंसति। शशंस। शस्यात्। अशंसीत्। चह, परिकल्कने। कल्कनं शाठ्यम्। चहति। चचाह। चेहतुः। चेहुः। अचहीत्। मह, पूजायाम्। महति। मेहतुः। अमहीत्। रह, त्यागे। रहति। रहि, गतौ। रंहति। ररंह। रंह्यात्। दृह, दृहि, बृह, बृहि वृद्धौ। दर्हति। ददर्ह।

---

[१] अत्रैव पाठः शपि परस्मैपदे लिङ्गम्। लृदित्करणमङि। अनिट्कारिकासु पाठो वलाद्यार्धधातुके। क्वमरचि तु विशिष्योपादानम्। एवं चाशीर्लिङि लिटिचास्याप्रयोगः।

ददहतुः । दृंहति । बृंहति । बृहि, शब्दे च[1] । बृंहति । बृहिर, इत्येके । अबृहत् । अबर्हीत् । तुहिर्, दुहिर् उहिर्, अर्दने । तोहति । तुतोह । अतुहत् । अतोहीत् । अदुहत् । अदोहीत्[2] । ओहति । उवोह । ऊहतुः । मा भवानुहत् । औहीत् । अर्ह, पूजायाम् । अर्हति । आनर्ह । आर्हीत् । आर्हिष्यत् । इति घुषिरादयः परस्मैपदिनः । ६० ।

अथ कृपूपर्य्यन्ता आत्मनेपदिनः । २३ । द्युत, दीप्तौ । द्योतते

## द्युतिस्वाप्योः सम्प्रसारणम् ॥ ७ । ४ । ६७॥

द्युति स्वापि इत्येतयोरभ्यासस्य सम्प्रसारणं भवति ।

## सम्प्रसारणाच्च ॥ ६ । १ । १०८ ॥

सम्प्रसारणादचि परतः पूर्वपरयोः स्थाने पूर्व एकादेशो भवति । दिद्युते । दिद्युताते । द्योतिता । द्योतिषीष्ट ।

## द्युद्भ्यो लुङि ॥ १ । ३ । ९१ ॥

द्युतादिभ्यो लुङि वा परस्मैपदं भवति । पुषादिसूत्रेण परस्मैपदेऽङ् । अद्युतत् । अद्योतिष्ट । श्विता, वर्णे । श्वेतते । शिश्विते । अश्वितत् । अश्वेतिष्ट । ञिमिदा, स्नेहने । मेदते ।

## मिदेर्गुणः ॥ ७ । ३ । ८२ ॥

मिदेरिको गुण इत्संज्ञकशकारादौ प्रत्यये परे । एश आदिशित्त्वा भावान्नानेन गुणः । मिमिदे । अमिदत् । अमेदिष्ट । ञिष्विदा, स्नेहन मोचनयोः । अस्विदत् । अस्वेदिष्ट । ञिक्ष्विदा, इत्येके । अक्ष्विदत् । अक्ष्वेदिष्ट । रुच, दीप्तावभिप्रीतौच । अरुचत् । अरोचिष्ट । घुट, परि

[ १ ] बृंहितं करिगर्जितम् ।

[ २ ] अनिड्धातुष्वस्य दुहेर्ग्रहणन्न ।

वर्तने । अघुटत् । अघोटिष्ट । रुट, लुट, लुठ, प्रतिघाते । अरुटत् । अरो- टिष्ट । अलुठत् । अलोटिष्ट । शुभ, दीप्तौ । शोभते । शुशुभे । अशुभत् । अशोभिष्ट । क्षुभ, संचलने । क्षोभते । चुक्षुभे । अक्षुभत् । अक्षोभिष्ट । णभ, तुभ, हिंसायाम् । अनभत् । अनभिष्ट । स्रंसु, ध्वंसु, भ्रंसु, अवस्रंसने । ध्वंसु, गतौ च । अस्रसत् । अस्रंसिष्ट । अध्वसत् । अध्वंसिष्ट । अभ्रसत् । अभ्रंसिष्ट । भ्रशु, भ्रंशु, अधः पतने इतिदिवादौ । स्रम्भु, विश्वासे । अस्रभत् । अस्रम्भिष्ट । वृतु, वर्तने । वर्तते । ववृते ।

## वृद्भ्यः स्यसनोः ॥ १ । ३ । ९२ ॥

वृतादिभ्यः पञ्चभ्यः परस्मैपदं वा स्ये सनि च परतः ।

## न वृद्भ्यश्चतुर्भ्यः ॥ ७ । २ । ५९ ॥

वृतादिभ्यश्चतुर्भ्य उत्तरस्य सादेरार्द्धधातुकस्य परस्मैपदेषु इडागमो न भवति । वर्त्स्यति । वर्तिष्यते । अवृतत् । अवर्तिष्ट । अवर्त्स्यत् । वृधु, वृद्धौ शृधु, शब्दकुत्सायाम् । इमौ वृतुवत् । स्यन्दू, प्रस्रवणे । स्यन्दते । सस्यन्दे । सस्यन्दाते । सस्यन्दिरे । सस्यन्त्से । सस्यन्दिध्वे । सस्यन्ध्वे । स्यन्दिता । स्यन्ता । स्यन्त्स्यति[२] । स्यन्दिष्यते । स्यन्त्स्यते । स्यन्दिषीष्ट । स्यन्त्सीष्ट । "द्युद्भ्यो लुङी" ति परस्मैपदपक्षेऽङ् । नलोपः । अस्यदत् । अस्यन्दिष्ट । अस्यन्त । अस्यन्त्साताम् । अस्यन्त्सत । अस्यन्त्स्यत । अस्यन्दिष्यत ।

## अनुविपर्य्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥ ८ । ३ । ७२ ॥

अनु वि परि अभि नि इत्येतेभ्य उत्तरस्य स्यन्दतेरप्राणिषु सकारस्य मूर्धन्य आदेशो भवति । अनुष्यन्दते । अनुस्यन्दते वा, जलम् । अप्राणिषु

---

[१] अयमभावेपि । नभन्तामन्यके समे । माभूवन्नान्यके सर्वे इति निरुक्तम् ।
[२] "निषेधाश्च बलीयांसः" इति परिभाषया नेड्विकल्पः । चतुर्ग्रहणं च स्पष्टार्थ मेवेतितु परिभाषेन्दुशेखरे नागोजिभट्टाः ।

किम् । अनुस्यन्दते हस्ती । अप्राणिष्विति पर्युदासान्मत्स्योदके अनुष्यन्देते इत्यत्रापि पक्षे षत्वं भवत्येव । प्राणिषु नेत्युक्तौ तु न स्यात् । कृपू, सामर्थ्ये ।

## कृपो रो लः ॥ ८ । २ । १८ ॥

कृप उ इति छेदः, कृपेति लुप्तषष्ठीकम् । कृपेर्धातोरेफस्य लकारादेशो भवति । कृपेर्ऋकारस्यावयवो यो रेफसदृशस्तस्य च लकारसदृशः । कल्पते । चक्लृपे । चक्लृपिषे । चक्लृप्से । स्यन्दिवत् ।

## लुटि च क्लृपः ॥ १ । ३ । ९३ ॥

लुटि स्यसनोश्च कृपेः परस्मैपदं वा भवति ।

## तासि च क्लृपः ॥ ७ । २ । ६० ॥

क्लृप उत्तरस्य तासेः सकारादेरार्द्धधातुकस्य परस्मैपदेषु इडागमो न भवति । कल्प्ता । कल्प्तासि । कल्प्तास्थ । कल्पितासे । कल्प्तासे । कल्पस्यति कल्पिष्यते । कल्प्स्यते । कल्पिषीष्ट । क्लृप्सीष्ट, अक्लृपत् । अकल्पिष्ट । अक्लृप्त । अकल्प्स्यत् । अकल्पिष्यत । अकल्प्स्यत । वृत् । सम्पूर्णो । वृतादिर्घुतादिश्च । २३ । अथ त्वरत्यन्ता आत्मनेपदिन स्त्रयोदश । घट, चेष्टायाम् । घटते । जघटे । अघटिष्ट । अघटिष्यत । व्यथ, भयसंचलनयोः । व्यथते ।

## व्यथो लिटि ॥ ७ । ४ । ६८ ॥

व्यथे लिटिपरतोऽभ्यासस्य सम्प्रसारणं भवति । विव्यथे । विव्यथाते । विव्यथिरे । प्रथ, प्रख्याने । प्रथते । पप्रथे । अप्रथिष्ट । प्रस, विस्तारे । प्रसते । पप्रसे । म्रद, मर्दने । म्रदते । मम्रदे । स्खद, स्खदने । स्खदते । चस्खदे । क्षजि, गतिदानयोः । क्षञ्जते । चक्षञ्जे । दक्ष,[1] गतिहिंसनयोः ।

---

[ १ ] पूर्वं पठितस्य मित्वार्थोऽनुवादः ।

दक्षते । ददक्षे । क्रप, कृपायां गतौ च । क्रपते। चक्रपे। कदि, क्रदि, क्लदि, वैक्लव्ये। वैकल्य इत्यन्ये। कन्दते। चकन्दे । कद, क्रद, क्लद, इत्यन्ये। कदते। क्रदते। क्लदते। ञित्वरा, संभ्रमे। त्वरते। तत्वरे। इति घटादय षित[1] उदात्ता अनुदात्तेतः। अथ फणान्ताः परस्मैपदिनः। ज्वर, रोगे। ज्वरति। जज्वार। गड, सेचने । गडति। जगाड। हेड, वेष्टने। हेडति। जिहेड। वट, भट, परिभाषणे। वटति। भटति। बभाट। णट, नृत्तौ। नटति। ननाट । ष्टक, प्रतीघाते। स्तकति । तस्ताक। चक तृप्तौ। चकति। चचाक। कखे, हसने। रगे, शङ्कायाम्। रगति। लगे, सङ्गे। हृगे, ह्लगे, षगे, ष्टगे, सम्वरणे। कगे, नोच्यते। अस्यायमर्थ इति विशिष्य नोच्यते। क्रियासामान्यार्थत्वात्। अनेकार्थत्वादित्यन्ये । अक, अग, कुटिलायां गतौ। कण, रण, गतौ। चकाण। रराण चन, शण, श्रण, दानेच। शण,गतावित्यन्ये। श्रथ, श्लथ, क्रथ, क्लथ, हिंसार्थाः। वन च। हिंसायामितिशेषः। वनु, च नोच्यते। ज्वल, दीप्तौ। ह्वल, ह्मल, सञ्चलने। ह्वलति। ह्मलति। स्मृ, आध्याने। दृ, भये। नॄ, नये। क्र्यादिषु पठिष्यमाणस्यानुवादः। नयादन्यत्र नारयति। श्रा, पाके। श्रै इति कृतात्वस्य श्रा इत्यादादिकस्य च सामान्येनानुकरणम्[2]। मारणतोषणनिशामनेषु ज्ञा, एष्वर्थेषु ज्ञाधातुर्मित् नान्यत्र। अयं धातुः क्र्यादिगणस्य। कम्पने चलिः। छदिः, ऊर्जने। अयं चुरादौ पठिष्यमाणः। जिह्वोन्मथने लडिः, अयमपि चुरादेः। मदी, हर्षग्लेपनयोः। अयं दिवादेः। ध्वन, शब्दे। अयमस्मिन्नेव गणे पठिष्यते। दलि, वलि, स्खलि, रणि, ध्वनि, त्रपि, क्षपयश्चेति भोजः। तत्र ध्वनिरणी उदाहृतौ। दल, विशरणे। वल,

[१] षित्वादङ् कृत्सु वक्ष्यते।
[२] लुग्विकरणेति, लक्षणप्रतिपदोक्तेतिपरिभाषाभ्याम्।
[३] निशामनं चक्षुषज्ञानमिति माधवः। ज्ञापनमात्रमित्यन्ये, ज्ञापनञ्च मारणादिकम्।

सम्वरणे। स्खल, सञ्चलने। त्रपूष्, लज्जायामिति गताः। तेषां णौ-दलयतीत्यादि। चै, क्षये इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः। क्षापयति। स्वन, अवतंसने। शब्दे इति पठिष्यमाणस्यानुवादः। स्वनयति। अन्यत्र स्वानयति। घटादयो मितः। मित्संज्ञका इत्यर्थः। जनी-जृष्क्नसुरञ्जोऽमन्ताश्च ॥ मित इत्यनुवर्तते। ज्वलह्वलह्मलनमामनु-पसर्गाद्वा ॥ एषां वा मित्वम्। ज्वलयति। ज्वालयति। ग्लास्नावनुवमाश्च ॥ अनुपसर्गादेषां वा मित्वम्। न कम्यमिचमाम् ॥ अमन्तत्वात्प्राप्तं मित्त्वं निषिध्यते। कामयते। आमयति। चामयति। शमो दर्शने ॥ मित्त्व। निशामयति रूपम्। यमोऽपरिवेषणे ॥ यच्छतिर्भोजनतोऽन्यत्र मित्त्व। आयामयति-व्यापारयतीत्यर्थः। अन्यत्र यमयति ब्राह्मणान्। भोजयतीत्यर्थः। स्खदिरवपरिभ्याञ्च ॥ मित्त्व। अवस्खादयति। परिस्खादयति। फण, गतौ। फणति। पफाण।

## फणाञ्च सप्तानाम् ॥ ६। ४। १२५ ॥

फणादीनांसप्तानां धातूनामवर्णस्य स्थाने वा एकार आदेशो भवति अभ्यासलोपश्च लिटिकिति परतस्थलिच सेटि। फेणतुः। फेणुः। फेणिथ। पफणतुः। पफणतुः। फणयति। (वृत्) घटादयः समाप्ताः। फणेः प्रागेव वृदित्येके। तन्मते-फाणयतीत्यदि। राजृ, दीप्तौ। उदात्तः स्वरितेत्। राजति। राजते। रेजतुः। रराजतुः। रेजे। रराजे। राजिष्यति। राजिष्यते। टुभ्राजृ, टुभ्राशृ, टुभ्लाशृ, दीप्तौ। अनुदात्तेतः। भ्राजते। भ्रेजे। बभ्राजे। भ्राजितासे। वाभ्राशेति श्यन्वा। भ्राश्यते। भ्राशते। भ्रेशे। बभ्राशे। भ्लाश्यते। भ्लाशते। भ्लेशे। बभ्लाशे।

अथ क्षरत्यन्ताः परस्मैपदिनः षड्विंशतिः। स्यमु, स्वन, ध्वन, शब्दे। स्यमति। सस्याम। स्येमतुः। सस्यमतुः। अस्यमीत्। स्वेनतुः। सस्व-

[ २ ] अवतंसनं भूषणम्।

नतुः । अस्वानीत् अस्वनीत् फणादयः सप्त समाप्ताः । ध्वनति । दध्वान । दध्वनतुः । अध्वानीत् । अध्वनीत् । अध्वनिष्यत् । षम, ष्टम, अवैकल्ये । समति । तस्ताम । ज्वल, दीप्तौ । ज्वलति । जज्वाल । अज्वालीत् । चल, कम्पने । चलति । चचाल । जल, घातने । घातनं तैक्ष्ण्यम् । टल, ट्वल, वैक्लव्ये । ष्ठल । स्थाने । स्थलति । हल, विलेखने । जहाल । अहालीत् । णल, गन्धे । बन्धन-इत्येके । नलति । ननाल । नेलतुः । अनालीत् । पल, गतौ । पलति । बल, प्राणने धान्यावरोधे च । बलति । बबाल । बेलतुः । बेलुः । पुल, महत्वे । पोलति । कुल, संस्त्याने बन्धुषु च । संस्त्यानं संघातः । बन्धुशब्देन तद्व्यापारो गृह्यते । कोलति । चुकोल । शल, हुल, पत्लृ, गतौ । शशाल । जुहोल । पपात । पेततुः । पतिता ।

## पतः पुम् ॥ ७ । ४ । १९ ॥

पतेरङ्गस्य पुमागमो भवत्यङि परतः । अपप्तत् । क्वथे, निष्पाके । क्वथति । चक्वाथ । अक्वथीत् । पथे, गतौ । अपथीत् । मथे, विलोडने । मेथतुः । अमथीत् । टुवम, उद्गिरणे । वमति । ववाम । ववमतुः । वादित्वादेत्वाभ्या-सलोपौ न । अवमीत् । अवमिष्यत् । भ्रमु, चलने । वाभ्राशेति श्यन्वा । भ्राम्यति । भ्रमति ।

## वा जॄभ्रमुत्रसाम् ॥ ६ । ४ । १२४ ॥

जॄ भ्रमु त्रस इत्येतेषामङ्गानामतः स्थाने वा एकारादेशो भवति, अभ्यासलोपश्च लिटिकिति परतस्थलि च सेटि । भ्रेमतुः । बभ्रमतुः । अभ्र-मीत् । क्षर, संचलने , अक्षारीत् , इति स्यमादयः सेटः समाप्ताः २६ ,

[ १ ] वैक्लव्यं भयादिजनितोद्विग्नता ।

[ २ ] धान्यानां कुसूलादावेकीकरणव्यापारे ।

अथ द्वावनुदात्तेतौ, षह, मर्षणे, सहते, परिषहते, सहेते, सहन्ते, सेहे, सेहाते, सहिता, तीषसहेति वा इट्, इडभावे ढत्वधत्वष्टुत्वढलोपाः,

सहिवहोरोदवर्णस्य ॥ ६ । ३ । ११२ ॥

सहि वहि इत्येतयोरवर्णस्यौकार आदेशो भवति ढूलोपे,

सोढः ॥ ८ । ३ । ११५ ॥

सहिरयं सोढ् भूतोगृह्यते तस्य सकारस्य मूर्धन्यादेशो न भवति। परिसोढा।

(१) सिवादीनां वाऽड्व्यवायेपि ॥ ८ । ३ । ७१ ॥

सिवादीनामड्व्यवायेऽपि परिनिविभ्य उत्तरस्य सकारस्य वा—मूर्धन्यो भवति। पर्यसहत। पर्यषहत। रमु. क्रीडायाम्। रेमे। रेमिषे। रन्ता। रंस्यते। अरंस्त। अरंसाताम्। अरंस्यत॥ अथ कसन्ताः सप्त परस्मैपदिनः। षद्लृ, विशरणगत्यवसादनेषु।

(२) पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥ ७ । ३ । ७८ ॥

पा घ्रा ध्मा स्था म्ना दाण् दृशि अर्त्ति सर्त्ति शद सद इत्येतेषां पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ शीय सीद इत्येते आदेशा भवन्ति शिति परतः। सीदति। ससाद। सेदतुः। सेदिथ[३]। ससत्थ।

---

[१] सिव सह सुट् स्तु स्वञ्ज इति सिवादयः।

[२] लुग्विकरणपरिभाषया 'पा रक्षणे' इत्यस्य ग्रहणं न।

[३] भारद्वाजनियमादिट् पक्षे "थलि च सेटि" इत्येत्वाभ्यासलोपौ।

सत्ता। सत्स्यति। लृदित्वादङ्। असदत्। असत्स्यत्। सदिरप्रतेः। निषीदति। न्यषीदत्।

## सदेः परस्य लिटि ॥ ८। ३। ११८॥

सदेरभ्यासात्परस्य सकारस्य षत्वन्न लिटि। निषसाद। निषेदतुः। शद्लृ, शातने

## शदेः शितः ॥ १। ३। ६०॥

शदिर्यः शिद्भावी शितो वासम्बन्धी तस्मादात्मनेपदं भवति। शीयते। शशाद। शेदतुः। शेदुः। शेदिथ। शशत्थ। शत्ता। शत्स्यति। अशदत्। क्रुश, आह्वाने रोदने च। क्रोशति। चुक्रोश। व्रश्चेति षत्वे ष्टुत्वे च। क्रोष्टा। क्रोक्ष्यति। शलः क्सः। अक्रुक्षत्। कुच, संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। कोचति चुकोच। बुध, अवगमने। बोधति। बुबोध। बोधिता। बोधिष्यति। रुह, बीजजन्मनि प्रादुर्भावे च रोहति। रुरोह। रुरुहतुः। रुरुहुः। रोढा। रोक्ष्यति। अरुक्षत्। कस, गतौ। कसति। चकास। अकसीत्। अकासीत्। (वृत्) ज्वलादिगणः समाप्तः।[1]

अथ गूहत्यन्ताः स्वरितेतोऽष्टत्रिंशत्। हिक्क, अव्यक्ते शब्दे। हिक्कति। हिक्कते। अञ्चु,[2] गतौ याचने च। अञ्चति। अञ्चते। आनञ्च। आनञ्चे। अच्यात्। अचु, इत्येके। अचि, इत्यपरे। अञ्च्यात्। टुयाचृ, याच्ञायाम्। याचति। याचते। रेटृ, परिभाषणे। रेटति। रेटते। चते, चदे, याचने चतति। चेते। अचतीत्। चदति। चेदे। अचदीत्। प्रोथृ, पर्याप्तौ। प्रोथति। प्रोथते। मिदृ, मेदृ, मेधाहिंसनयोः। मेदति। मिमेद। मिमिदे। मिमेदे। मिधृ,

[१] षढोः कः सीति कत्वम्।

[२] पूर्वत्र गताविति पाठः क्रियाफलस्य कर्तृगामित्वे परस्मैपदार्थः।

मेधृ, सङ्गमे च । मेधति । मेधते । मिथृ, मेथृ मेधाहिंसनयोरित्येके । णिदृ, णेदृ, कुत्सासन्निकर्षयोः । नेदति । नेदते । निनेद । निनिदे । शृधु, मृधु, उन्दने । शर्धति । शर्धते । मर्धति । मर्धते । बुधिर्, बोधने । बोधति । बोधते । अबुधत् । अबोधीत् । अबोधिष्ट । उबुन्दिर् , निशामने । निशामनं ज्ञानम् । बुन्दति । बुन्दते । अबुदत् । अबुन्दीत् । वेणृ, गतिज्ञान चिन्तानिशामनवादित्रग्रहणेषु । वेणति । वेणते । वेनृ, इत्येके । वेनति । वेनते । खनु, अवदारणे । खनति । खनते । चखान । गमहनेत्युपधालोपः । चख्नतुः । ये विभाषा । खायात् । खन्यात् । चीवृ, आदानसम्वरणयोः । चीवति । चीवते । । चिचीव । चिचीवे । चायृ, पूजानिशामनयोः । चायति । चायते । चचाय । चचाये ।

## चायः की ॥ ६ । १ । ३५ ॥

चायतेर्धातोश्छन्दसिविषये बहुलं कीत्ययमादेशो भवति । चिक्यतुः चचाय । व्यय, गतौ । अव्ययीत् । दाशृ, दाने । ददाश । ददाशे । भेषृ, भये । गतावित्येके । भेषति । भेषते । भ्रेषृ, भ्लेषृ, गतौ । भ्रेषति । भ्रेषते । अस, गतिदीप्त्यादानेषु । असति । असते । आस । आसे । अष, इत्येके स्पश, बाधनस्पर्शनयोः । स्पर्शनं ग्रन्थनम् । स्पशति । स्पशते । पस्पाश । पस्पशे । अस्पशिष्ट । अस्पाशीत् । अस्पशीत् । लष, कान्तौ । वाभ्राशेतिश्यन्वा । लष्यति । लषति । ललाष । लेषे । चष, भक्षणे । छष, हिंसायाम् । छषति । छषते । चच्छषतुः । चच्छषे । झष, आदानसंवरणयोः । भ्रक्ष, भ्लक्ष, अदने । भक्ष, इत्येके । भक्षति । भक्षते । दासृ, दाने । दासति । दासते । माहृ, माने । गुहू, सम्वरणे ।

## ऊदुपधाया गोहः ॥ ६ । ४ । ८९ ॥

[ १ ] दीपजनेति चिण् तु न । तत्र साहचर्येण दैवादिकस्यैव ग्रहणात् ।

गोहोऽङ्गस्य उपधाया ऊकारादेशो भवति अजादौ प्रत्यये परतः। गूहति। गूहते। ऊदित्त्वादिड् वा। गूहिता। गोढा। गूहिष्यति। घोक्ष्यति। गूहेत्। गुह्यात्। अगूहीत्। इडभावे क्सः। अघुक्षत्।

## लुग्वादुहदिहलिहगुहामात्मनेपदे दन्त्ये[1] ॥ ७। ३। ७३॥

दुह दिह लिह गुह इत्येतेषामात्मनेपदे दन्त्यादौ परतः क्सस्य वा लुग्भवति। ढत्वधत्वष्टुत्वढलोपदीर्घाः। अगूढ। अघुक्षत। अघुक्षाताम्। अघुक्षन्त। अगुह्वहि। अघुक्षावहि। अघुक्षामहि। इति ह्विकादय उदात्ताः स्वरितेदुभयतोभाषाः समाप्ताः।

अथाजन्ता उभयपदिनः पञ्च। श्रिञ् सेवायाम्। श्रयति। श्रयते। शिश्राय। शिश्रिये। श्रयिष्यते। श्रयतु। श्रयताम्। श्रीयात्। अशिश्रियत्। भृञ्, भरणे। भरति। भरते। बभार। बभ्रतुः। बभ्रुः। बभर्थ। बभ्रथुः। बभ्र। बभार। बभर। बभृव। बभृम। बभ्रे। भर्ता। भर्त्तासि। भर्त्तासे।

## ऋद्धनोः स्ये ॥ ७। २। ७० ॥

ऋकारान्तानां धातूनां हन्तेश्च स्ये इडागमो भवति। भरिष्यति। भरिष्यते। भरतु। भरताम्। अभरत्। अभरत। भरेत्।

## रिङ्शयग्लिङ्क्षु ॥ ७। ४। २८ ॥

ऋकारान्तस्याङ्गस्य शयक् इत्येतयो र्लिङि च यकारादौ असार्वधातुके परतो रिङित्ययमादेशो भवति। अकृदिति दीर्घो न, रीङि प्रकृते रिङ्विधानसामर्थ्यात्। भ्रियात्।

[१] ताविति वक्तव्ये दन्त्यग्रहणस्य दन्त्योष्ठ्यस्यापि परिग्रहार्थत्वाद् 'अगुह्वहि' इत्यत्रापि लुग् भवति।

## उश्च ॥ १ । २ । १२ ॥

ऋवर्णान्ताद्धातोः परौ लिङ्सिचावात्मनेपदेषु झलादी कितौ भवतः। भृषीष्ट । भृषीयास्ताम् । भृषीरन् । अभार्षीत् । अभार्ष्टाम् । अभार्षुः ।

## ह्रस्वादङ्गात् ॥ ८ । २ । २७ ॥

ह्रस्वान्तादङ्गादुत्तरस्य सस्य लोपो भवति झलि परतः । अभृत । अभृषाताम् । अभरिष्यत् । अभरिष्यत । हृञ्, हरणे । हरणं प्रापणं स्वीकारः स्तेयं नाशनञ्च । हरति । हरते । जहर्थ । जह्रिव । जह्रिषे । हर्ता । हरिष्यति । धृञ्, धारणे । धरति । धरते । अधार्षीत् । अधृत । णीञ्, प्रापणे । नयति । नयते । निनाय । निन्ये । नेता । नेष्यति । नेष्यते । अनैषीत् । अनेष्ट । अनेष्यत् । अनेष्यत । भरत्यादयश्चत्वारोऽनुदात्ताः । अथ धेटादयो ज्यत्यन्ताः षट्चत्वारिंशत्परस्मैभाषाः ॥ धेट् पाने । धयति । धयतः । धयन्ति ।

## आदेच उपदेशेऽशिति ॥ ६ । १ । ४५ ॥

एजन्तो योधातुरुपदेशे तस्याकारादेशो भवति, शिति तु प्रत्यये न भवति ।

## आत औ णलः ॥ ७ । १ । ३४ ॥

आकारान्ता दङ्गादुत्तरस्य णल औकारादेशो भवति । दधौ ।

## आतो लोप इटि च ॥ ६ । ४ । ६४ ॥

इडादावार्धधातुके क्ङिति चाकारन्तस्याङ्गस्य लोपो भवति । दधतुः । दधुः । दधिथ । दधाथ । दधथुः । दध । दधौ । दधिव । दधिम । धाता । धास्यति । धयतु । अधयत् । धयेत् ।

## दाधा घ्वदाप् ॥ १ । १ । २० ॥

दारूपाश्चत्वारो धातवो धारूपौ च द्वौ दाब्दैपौ वर्जयित्वा घुसंज्ञका भवन्ति ।

## एर्लिङि[1] ॥ ६ । ४ । ६७ ॥

घुमास्थागापाजहातिसामङ्गानां लिङि परत एकारादेशो भवति । धेयात् । धेयास्ताम् । धेयासुः ।

## विभाषा धेट्श्व्योः ॥ ३ । १ । ४९ ॥

एताभ्यां उत्तरस्य च्लेर्विभाषा चङादेशो भवति । अदधत् । अदधताम् । अदधन् ।

## विभाषा घ्राधेट्शाच्छासः ॥ २ । ४ । ७८ ॥

घ्रा धेट् शा छा सा इत्येतेभ्य उत्तरस्य सिचः परस्मैपदेषु विभाषा लुग्भवति । अधात् । अधाताम् । अधुः ।

## यमरमनमातां सक्च ॥ ७ । २ । ७३ ॥

यम रम नम इत्येतेषामङ्गानामाकारान्तनाञ्च सगागमो भवति । परस्मैपदे सिचि, इडागमश्च । अधासीत् । अधासिष्टाम् । अधासिषुः । अधास्यत् । ग्लै, म्लै, हर्षक्षये । हर्षक्षयो धातुक्षयः । ग्लायति । जग्लौ । जग्लिथ । जग्लाथ ।

## वाऽन्यस्य संयोगादेः ॥ ६ । ४ । ६८ ॥

घ्वादिभ्योऽन्यस्य संयोगादेराकारान्तस्य वा एकारादेशो भवति लिङि परतः । ग्लायात् । ग्लेयात् । अग्लासीत् । म्लायतीत्यादि । द्यै, न्यक्क-

[१] आर्धधातुके किति लिङीत्यर्थः ।
[२] आर्धधातुकाधिकारादार्धधातुके कितिलिङीत्यर्थः

रणे। न्यक्करणं तिरस्कारः। द्रै, स्वप्ने। ध्रै, तृप्तौ। ध्यै, चिन्तायाम्। रै, शब्दे। स्त्यै, ष्ट्यै, शब्दसंघातयोः। षोपदेशस्यापि रूपं तुल्यम्। तत्फलन्तु तिष्ट्यासतीत्यादिषु षत्वम्। खै, खदने। क्षै, जै, षै (१) क्षये। क्षायति। चक्षौ। जायति। जजौ। सायति। ससौ। कै, गै, शब्दे। कायति। गायति। गेयात्। अगासीत्। शै, श्रै, पाके। शायति। श्रायति। पै, ओवै, शोषणे। पायति। पायात्। अपासीत्। वायति। ववौ। वायात्। अवासीत्। ष्टै, वेष्टने। स्तायति। तस्तौ। स्तेयात्। स्तायात्। अस्तासीत्। ष्णै, वेष्टने। शोभायाञ्चेत्येके। शौच इत्यन्ये। स्नायति। सस्नौ। अस्नासीत्। अस्नास्यत्। दैप्, शोधने। दायति। घुत्वाभावादेत्वसिज्लुकौ न। दायात्। अदासीत्। पा, पाने। पाघ्राध्मेति पिबादेशः। पिबादेशोऽदन्तस्तेन न गुणः। पिबति। पेयात्। अपात्। घ्रा, गन्धोपादाने। जिघ्रति। घ्रायात्। घ्रेयात्। अघ्रासीत्। अघ्रात्। ध्मा, शब्दाग्निसंयोगयोः। धमति। दध्मौ। ष्ठा, गतिनिवृत्तौ। तिष्ठति। अस्थात्। अस्थास्यत्। म्ना, अभ्यासे। मनति। दाण्, दाने। यच्छति। देयात्। अदात्। ह्वृ, कौटिल्ये। ह्वरति।

## ऋतश्च संयोगादेर्गुणः ॥ ७। ४। १० ॥

ऋकारान्तस्याङ्गस्य संयोगादेर्गुणो भवति लिटि परतः। किदर्थमपीदं परत्वाण्णल्यपि। रपरत्वम्। उपधावृद्धिः। जह्वार। जह्वरतुः। जह्वरुः। जह्वर्थ। ह्वर्ता। ऋद्धनोः स्ये। ह्वरिष्यति।

## गुणोऽर्त्तिसंयोगाद्योः ॥ ७। ४। २९ ॥

---

[१] घुमास्थेत्यत्र विभाषाघ्राधेडित्यत्रच स्यतेरेव व्याख्यानाद् ग्रहणेन नैत्वसिज्लुकौ।

[२] गातिस्थेति सिचो न लुक् पारूपस्य लाक्षणिकत्वात्।

गुणो भवत्यर्त्तेः संयोगादीनामृकारान्तानां यक्ति परतो लिङि च यकारादावसार्वधातुके । ह्वर्यात् । अह्वार्षीत् । अह्वार्ष्टाम् । अह्वार्षुः । अह्वरिष्यत् । स्वृ, शब्दोपतापयोः । स्वरति । सस्वार । स्वरतिसूतीति वेट् । सस्वरिथ । सस्वर्थ । वमयोस्तु ।

## श्र्युकः किति ॥ ७ । २ । ११ ॥

श्रि इत्येतस्योगन्तानाञ्च किति प्रत्यये परत इडागमो न भवति । परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्याद-नेन निषेधे प्राप्ते, क्रादिनियमान्नित्यमिट् । सस्वरिव । सस्वरिम । परत्वा-दृद्धनोरितिनित्यमिट् । स्वर्यात् । अस्वारीत् । अस्वारिष्टाम् । अस्वार्षीत् । अस्वार्ष्टाम् । स्मृ, चिन्तायाम् । वृ, संवरणे । सृ, गतौ । क्रादित्वान्नेट् । ससर्थ । ससृव । रिङ् । स्रियात् । असार्षीत् । असार्ष्टामित्यादि ।

## सर्तिशास्त्यर्तिभ्यश्च ॥ ३ । १ । ५६ ॥

सृगतौ, शासु अनुशिष्टौ, ऋगतौ, इत्येतेभ्यः परस्य च्लेरङादेशो भवति । इत्यङ् तु न । लुप्तशपा शासिना साहचर्यात् सर्त्यर्त्योर्जौहोत्यादिकयोरेव ग्रहणात् । शीघ्रगतौ तु पाघ्राध्मेति धौरादेशः । धावति । ऋ, गतिप्रापणयोः । ऋच्छति ।[१]

## ऋच्छत्यृताम् ॥ ७ । ४ । ११ ॥

ऋच्छतेरङ्गस्य ऋइत्येतस्य ऋकारान्तानां च लिटि परतो गुणो भवति उपधावृद्धिः । आर । आरतुः । आरुः ।

## इडत्त्यर्तिव्ययतीनाम् ॥ ७ । २ । ६६ ॥

[१] पाघ्रेत्यादिना ऋच्छादेशः ।

अर्चि अर्तिव्ययति इत्येतेषां थलीडागमो भवति। आरिथ। अर्ता। अरिष्यति[1]। अर्यात्। आर्षीत्। आर्ष्टाम्। गृ, घृ, सेचने। गरति। जगार। जगर्थ। जग्रिव। रिङ्। ग्रियात्। अगार्षीत्। ध्वृ, हूर्छने[2]। स्रु, गतौ। स्रवति। स्रूयात्। णिश्रीति चङ्। लघूपधगुणादन्तरङ्गत्वादुवङ्। असुस्रुवत्। षु, प्रसवैश्वर्ययोः। सवति। सुषाव। सुषोथ। सुषविथ। सुषुविव। सोता।

## स्तुसुधूञ्भ्यः परस्मैपदेषु ॥ ७। २। ७२ ॥

स्तु सु धूञ् इत्येतेभ्यः सिचि परस्मैपदे परत इडागमो भवति। असावीत्। पूर्वोत्तराभ्यां ञिद्भ्यां साहचर्यात् सुनोतेरेव ग्रहणमितिपक्षे— असौषीत्। श्रु श्रवणे।

## श्रुवः शृ च ॥ ३। १। ७४ ॥

श्रुवः श्नुप्रत्ययो भवति तत्संनियोगेन श्रुवः शृ इत्ययमादेशो भवति। शपोऽपवादः। श्नोर्ङित्वाद्धातोर्गुणो न। शृणोति। शृणुतः।

## हुश्नुवोः सार्वधातुके ॥ ६। ४। ८७ ॥

हु इत्येतस्याङ्गस्य श्नुप्रत्ययान्तस्यानेकाचो ऽसंयोगपूर्वस्याजादौ सार्वधातुके परतो यणादेशो भवति। उवङोऽपवादः। शृण्वन्ति। शृणोमि शृण्वः। शृणुवः। शृण्मः। शृणुमः। शुश्राव। शुश्रोथ। शुश्रुव। शृणु। शृणवानि। शृणुयात्। अश्रौषीत्। ध्रु, स्थैर्ये। ध्रवति। अयं कुटादौ गत्यर्थोऽपि। दु, द्रु, गतौ। दवति। द्रवति। दुदाव। दुदोथ। दुदविथ। दुदुविव। दुद्रोथ। दुद्रुव। णिश्रीति चङ्। अदुद्रुवत्। जि, ज्रि, अभिभवे।

---

[१] 'ऋद्धनोः स्ये' इतीट्।

[२] हूर्च्छनं कौटिल्यं, हिंसायामपि दृश्यते।

अभिभवो न्यूनीकरणं न्यूनीभवनञ्च । जयति । जीयात् । अजैषीत्। इति धेटादयोऽनिटः ४६।

अथ डीङन्ता ङितस्त्रयोविंशतिः । ष्मिङ्, ईषद्धसने । स्मयते सिष्मिये। सिष्मियिढ्वे । सिष्मियिध्वे । गुङ्, अव्यक्ते शब्दे । गवते । जुगुवे। गाङ्, गतौ । गाते । गाते । गाते । गासे । गाथे । गाध्वे । इट एत्वे वृद्धिः । गै । गावहे । गामहे । जगे । लङ इटि । अगे । गेत । गेयाताम् । गेरन् । गासीष्ट । अगास्त[१] । अगास्यत । कुङ्, घुङ्, ङुङ्, उङ्, शब्दे । अन्ये तु उङ्, कुङ्, खुङ्, गुङ्, घुङ्, ङुङ, इत्याहुः । कवते । चुकुवे । घवते । जुघुवे । अवते । ऊवे । ऊविढ्वे । वार्णादाङ्गं बलीयः । इत्युवङ्, ततः सवर्णदीर्घः । ओता । ओष्यते । ओषीष्ट । औष्ट । ङवते । ङुङुवे । ङोता । ङोष्यते । च्युङ्, ज्युङ्, प्रुङ्, प्लुङ्, गतौ । क्रुङ्, इत्येके । रुङ्, गतिरेषणयोः । रेषणं हिंसा । रुरुवे । रवितासे । धृङ्, अवध्वंसने । धरते । दध्रे । अधृत । मेङ्, प्रणिदाने । प्रणिदानं विनिमयः, प्रत्यर्पणञ्च । मयते । ममेते । ममन्ते । देङ्, रक्षणे । दयते ।

## दयतेर्दिगि लिटि ॥ ७ । ४ । ९ ॥

दयतेरङ्गस्य लिटि परतो दिगीत्ययमादेशो भवति । दिग्ये[२] ।

## स्थाघ्वोरिच्च ॥ १ । २ । १७ ॥

तिष्ठतेर्धातोर्घुसञ्ज्ञकानां च इकारश्चान्तादेशः सिच्च किद्भवति तङि परतः । अदित । अदिथाः । अदिषि । श्यैङ्, गतौ । श्यायते । शश्ये । प्यैङ्, वृद्धौ । प्यायते । पप्ये । प्याता । अप्यास्त । अप्यास्यत । त्रैङ्,

[१] गाङ्कुटादीति ङित्वन्तु न । इङो गाङादेशङकारस्याचारितार्थ्येन तस्यैव तत्र ग्रहणात् ।

[२] दिग्यादेशेन द्वित्वबाधनमिष्यतइति भाष्यसंमतम्।

पालने । त्रायते । तत्रे । षिमङ्-प्रभृतयोऽनुदात्ता आत्मनेपदिनः । पूङ्, पवने । पवते । पुपुवे । पुपुविढ्वे । पुपुविध्वे । पविता । पविष्यते । मूङ्, बन्धने । मवते । डीङ्, विहायसागतौ[1] । डयते । डिड्ये । डयिता । तॄ, प्लवनसन्तरणयोः । उदात्तः परस्मैभाषः ।

## ॠत इद्धातोः ॥ ७ । १ । १०० ॥

ॠकारान्तस्य धातोरङ्गस्य इकारादेशो भवति । ( इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन ) तरति । ॠच्छत्यॄतामिति गुणः । तॄफलेत्येत्वम् । तेरतुः । तेरुः ।

## वॄतो वा ॥ ७ । २ । ३८ ॥

वॄ इति वृङ् वृञोः सामान्येन ग्रहणम्, तस्मादुत्तरस्य ॠकारान्तेभ्य श्चेटो वा दीर्घो भवति । तरिता । तरीता । हलिचेति दीर्घः । तीर्यात् ।

## सिचि च परस्मैपदेषु ॥ ७ । २ । ४० ॥

परस्मैपदपरे सिचि वॄत उत्तरस्य इटो दीर्घो न भवति । अतारीत् । अतारिष्टाम् । अतारिषुः । अतरीष्यत् । अतरिष्यत् । अथाष्टावनुदात्तेतः । गुप[2], गोपने । तिज, निशाने । मान, पूजायाम् । बध, बन्धने ।

## गुप्तिज्किद्भ्यः सन् ॥ ३ । १ । ५ ॥

गुप गोपने, तिज निशाने, कित निवासे, एतेभ्यो धातुभ्यः सन्प्रत्ययो भवति ।

[१] आकाशगमन इति यावत् ।

[२] गुपिप्रभृतयः किद्भिन्नानिन्दाद्यर्थकाएवानुदात्तेतो, दानशानौ स्वरितेतौ । एते नित्यं सन्नन्ताः । अर्थान्तरेऽननुबन्धकाश्चुरादयः । अनुबन्धस्यकेवलेऽचरितार्थत्वान्सन्नन्तात्तङ् । धातुशब्दमुच्चार्यविहितत्वात्सनोऽत्रनार्धधातुकत्वम्, तेनेड्गुणौ न ।

## मान्वधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ३ । १ । ६ ॥

एभ्यो धातुभ्यः सन् प्रत्ययो भवति, अभ्यासस्य चेकारस्य दीर्घादेशो भवति। सनाद्यन्ता इति धातुत्वम्।

## सन्यङोः ॥ ६ । १ । ९ ॥

सन्नन्तस्य यङन्तस्य चानभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। अभ्यासकार्य्यम्। जुगुप्सते। जुगुप्साञ्चक्रे। जुगुप्सांबभूव। जुगुप्सामास। जुगुप्सिता। जुगुप्सिष्यते। एवं तितिक्षते। मीमांसते। भष्भावश्चर्त्वम्। बीभत्सते। रभ, राभस्ये। रभते। रेभे। रब्धा। रप्स्यते। रभताम्। अरभत। रभेत। रप्सीष्ट। अरब्ध। अरप्स्यत। डुलभष्, प्राप्तौ। लभते। लेभे। ष्वञ्ज, परिष्वङ्गे।

## दंशसञ्जस्वञ्जां शपि ॥ ६ । ४ । २५ ॥

दंश सञ्ज स्वञ्ज इत्येतेषामङ्गानां शपि परत उपधाया नकारस्य लोपो भवति।

## रञ्जेश्च ॥ ६ । ४ । २६ ॥

रञ्जेश्च शपि परत नस्य लोपो भवति। स्वजते। (श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वेति व्याकरणान्तरम्[१]) सस्वजे। सस्वञ्जे। सदेः परस्य लिटीति सूत्रे (स्वञ्जेरुपसंख्यानम्) अभ्यासात्परस्य प्राप्तं षत्वं निवार्य्यते। परिषस्वजे। स्वङ्क्ता। स्वङ्क्ष्यते। स्वजेत। स्वङ्क्षीष्ट। प्रत्यष्वङ्क्त। प्राक्सितादड्व्यवायेऽपीतिषत्वम्। परिनिविभ्यस्तुसिवादीनांवेति विकल्पः। पर्यष्वङ्क्त। पर्यस्वङ्क्त। हद[२], पुरीषोत्सर्गे। हदते।

---

[१] अतएकेतिसूत्रे देभतुः, सदेः परस्येतिसूत्रे सस्वजे इति च, भाष्ये उदाहृतम्। एकदेशानुमत्या भाष्यकारस्यैतत्संमतमिति।

[२] एनं विभाषाऽनुदात्तेतमाहुः केचित्।

जहदे हत्ता । हत्स्यते । हदताम् । अहदत । हदेत । हत्सीष्ट । अहत्त । अहत्स्यत । इति रभादयश्चत्वारोऽनुदात्ता अनुदात्तेत आत्मनेभाषाः समाप्ताः ॥

अथ परस्मैपदिनः पञ्चदश । ञिष्विदा, अव्यक्ते शब्दे । स्वेदतीत्यादि स्कन्दिर्, गतिशोषणयोः । स्कन्दति । चस्कन्द । चस्कन्दिथ । झरोझ रीति दलोपः । चस्कन्थ । स्कन्ता । स्कन्त्स्यति । नलोपः । स्कद्यात् । इरितोवेत्यङ् वा । अस्कदत् । अस्कान्त्सीत् । अस्कान्ताम् । अस्कान्त्सुः ।

## वेः स्कन्देरनिष्ठायाम् ॥ ८ । ३ । ७४ ॥

वेरुपसर्गादुत्तरस्य स्कन्देः सकारस्य मूर्धन्यो वा भवति अनिष्ठायाम् । कृत्येवायं विकल्पोऽनिष्ठायामिति पर्य्युदासात् । विष्कन्तता विस्कन्तता । निष्ठायान्तु । विस्कन्नः ।

## परेश्च ॥ ८ । ३ । ७४ ॥

परिशब्दा च्चोत्तरस्य स्कन्देः सकारस्य वा मूर्धन्योभवति । पृथग्योगकरणादनिष्ठायामिति नानुवर्तत इति काशिका । तेन परिष्क[१]ण्णः । परिष्कन्नः । षत्वपक्षे णत्वम् । यभ, मैथुने । यभति । ययाभ । येभिथ । ययब्ध । यब्धा । यप्स्यति । णम, प्रह्वत्वे शब्दे च । नेमिथ । ननन्थ । नन्ता । अनंसीत् । अनंसिष्टाम् । गम्लृ, सृप्लृ, गतौ ।

## इषुगमियमां छः ॥ ७ । ३ । ७७ ॥

इषु गमि यम इत्येतेषां शितिपरतश्छकारादेशो भवति । गच्छति । जगाम । जग्मतुः । जग्मुः । जगमिथ । जगन्थ । गन्ता ।

[ १ ] पदद्वयाश्रयतया बहिरङ्गत्वात् षत्वस्यासिद्धत्वं न वाच्यम् । धातूपसर्गयोः कार्य्यमन्तरङ्गमित्यभ्युपगमात् । पूर्वं धातुरुपसर्गेण युज्यते ततः साधनेनेति भाष्यम् । पूर्वं साधनेनेति मतान्तरे तु न णत्वम् ।

## गमेरिट् परस्मैपदेषु ॥ ७ । २ । ५८ ॥

गमेर्धातोः सकारादेरार्धधातुकस्य परस्मैपदेष्विडागमो भवति । गमिष्यति । गच्छतु । अगच्छत् । लृदित्त्वादङ् । गमहनेत्युपधालोपस्तु न, अनङीतिपर्युदासात् । अगमत् । सर्पति । ससर्प ।

## अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम् ॥ ६ । १ । ५९ ॥

उपदेशेऽनुदात्तस्य धातोर्ऋकारोपधस्य झलादावकिति प्रत्यये परतोऽन्यतरस्याममागमो भवति । स्रप्ता । सर्प्ता । स्रप्स्यति । सर्प्स्यति । असृपत् । यम, उपरमे । यच्छति । ययाम । येमतुः । येमुः । येमिथ । ययन्थ । यन्ता । अयंसीत् । अयंस्यत् । तप, सन्तापे । तपति । तप्ता । अताप्सीत् ।

## निसस्तपतावनासेवने ॥ ८ । ३ । १०२ ॥

निसः सकारस्य मूर्द्धन्यादेशो भवति तपतौ परतोऽनासेवनेऽर्थे । आसेवनं पौनःपुन्यं ततोन्यदनासेवनम् । निष्टपति । त्यज, हानौ । त्यजति । तत्याज । तत्यजिथ । तत्यक्थ । त्यक्ता । त्यक्ष्यति । त्यजतु । अत्यजत् । त्यजेत् । त्यज्यात् । अत्याक्षीत् । अत्यक्ष्यत् । षञ्ज, सङ्गे । दंशसञ्जेत्यनुनासिकलोपः । ससञ्ज । सङ्क्ता । सङ्क्ष्यति । सजतु । असजत् । सजेत् । आशिषि क्त्वादुपधालोपे । सज्यात् । असाङ्क्षीत् । असंक्ष्यत् । दृशिर, प्रेक्षणे । पश्यति । ददर्श ।

## विभाषा सृजिदृशोः ॥ ७ । २ । ६५ ॥

सृजि दृशि इत्येतयो स्थलि विभाषा इडागमो न भवति ।

## सृजिदृशोर्झल्यमकिति ॥ ६ । १ । ५८ ॥

अनयोर्धात्वोर्झलादावकिति प्रत्यये परतोऽमागमो भवति । दद्रष्ठ । ददर्शिथ । द्रष्टा । द्रक्ष्यति । दृश्यात् । इरितोवेतिअङ् वा ।

## ऋदृशोऽङि गुणः ॥ ७ । ४ । १६ ॥

ऋवर्णान्तानां दृशेश्च अङि परतो गुणो भवति । अदर्शत् । अङभावे ।

## न दृशः ॥ ३ । १ । ४७ ॥

दृशेर्धातोः परस्य च्लेः क्सादेशो न भवति । अद्राक्षीत् । अद्रक्ष्यत् । दंश, दशने । दशनं दंष्ट्राव्यापारः । दंशसञ्जेति अनुनासिकलोपः । दशति । ददंशिथ । ददंष्ठ । दंष्टा । दङ्क्ष्यति । दश्यात् । अदाङ्क्षीत् कृष, विलेखने । विलेखनमाकर्षणम् । कर्षति । चकर्ष । क्रष्टा । कर्ष्टा । क्रक्ष्यति । कर्क्ष्यति । ( स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः ) अक्राक्षीत् । अक्राष्टाम् । अकार्क्षीत् । अकार्ष्टाम् । पक्षे क्सः । अकृक्षत् । अकर्क्ष्यत् । दह, भस्मीकरणे । ददाह । देहिथ । ददग्ध । दग्धा । धक्ष्यति । अधाक्षीत् । मिह, सेचने । मेहति । मिमेहिथ । मेढा । मेक्ष्यति । मेहतु । अमेहत् । मिह्यात् अमिक्षत् । अमेक्ष्यत् । इति स्कन्दादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः । कित, निवासे रोगापनयने च । अयमुदात्तेत् । चिकित्सति । निवासे तु केतयति । इतो वहत्यन्ताः स्वरितेतः । दान खण्डने । शान, तेजने । आभ्यां सन् , अभ्यासस्य दीर्घे द्वित्वे च । दीदांसते । दीदांसति । शीशांसते । शीशांसतीत्यादि । अर्थविशेषे सन् । अन्यत्र दानयति । डुपचष्, पाके । पचति[१] । पचते । पपाच । पेचिथ । पपक्थ । पेचे । पक्ता । पक्तासि । पक्तासे । पक्ष्यति । पक्ष्यते । पचतु । पचताम् । अपचत् । अपचत । पचेत् । पचेत । पच्यात् । पक्षीष्ट । अपाक्षीत् अपक्त । अपक्ष्यत् । अपक्ष्यत । षच, समावाये । सचति । सचते । अयं सेट् । भज, सेवायाम् । भजति । भजते । बभाज । भेजतुः ।

[१] स्वामिदासौ पचत इत्यत्र दासधर्मस्य स्वामिन्यारोपात् परस्मैपदम् । पचेते इत्यत्र स्वामिधर्मस्य दासे समारोपात्तङ् इति कैयटादौ स्पष्टम् ।

भेजिथ। बभक्थ। भक्ता। भक्ष्यति। भक्ष्यते। भक्षीष्ट। अभाक्षीत्। अभक्त। अभक्ष्यत्। रञ्ज, रागे। रञ्जेश्चेति नलोपः। रजति। रजते। अराङ्क्षीत्। अरङ्क्त। शप, आक्रोशे। आक्रोशो विरुद्धानुध्यानम्। शपति। शपते। शशाप। शेपे। शप्तासि। शप्तासे। अशाप्सीत्। अशप्त। त्विष, दीप्तौ। त्वेषति। त्वेषते। तित्वेष। तित्विषे। त्वेक्ष्यति। त्विक्षीष्ट। अत्विक्षत्। यज, देवपूजासंगतिकरण-दानेषु। यजति। यजते।

## लिट्यभ्यासस्योभयेषाम् ॥ ६।१।१७ ॥

उभयेषां वच्यादीनां ग्रह्यादीनां च लिटि परतोऽभ्यासस्य सम्प्रसारणम् भवति। इयाज।

## वचिस्वपियजादीनां किति ॥ ६।१।१५ ॥

वचिस्वपियजादीनां किति प्रत्ययेपरे सम्प्रसारणं भवति। पुनः प्रसङ्गविज्ञानाद् द्वित्वम्। ईजतुः। ईजुः। इयजिथ। इयष्ठ। ईजथुः। ईज। इयाज। इयज। ईजिव। ईजिम। ईजे। यष्टा। यक्ष्यति। यक्ष्यते। यजतु। यजताम्। अयजत्। अयजत। यजेत्। यजेत। इज्यात्। यक्षीष्ट। अयाक्षीत्। अयष्ट। अयक्ष्यत्। अयक्ष्यत। डुवप्, बीजसन्ताने, छेदने च। बीजसन्तानं क्षेत्रे विकिरणम्, गर्भाधानञ्च। वपति[1]। वपते। उवाप। ऊपे। वप्ता। उप्यात्। वप्सीष्ट। अवाप्सीत्। अवप्त। अवप्स्यत्। अवप्स्यत। वह, प्रापणे। वहति। वहते। उवाह। उवहिथ। सहिवहोरोदवर्णस्य। उवोढ। ऊहे। वोढा। वक्ष्यति। वक्ष्यते। उह्यात्। वक्षीष्ट। अवाक्षीत्। अवोढाम्। अवोढ। अवक्षाताम्।

[१] प्रणिवपति इत्यत्र नेर्गदेति णत्वम्।

अवत्तत । अवोढाः । अवोढ्वम् । अवक्ष्यत् । अवक्ष्यत । इति पचादयोऽनुदात्ताः स्वरितेत उभयपदिनः । वस, निवासे । वसति । उवास ।

## शासिवसिघसीनाञ्च ॥ ८ । ३ । ६० ॥

एतेषां च इण्कोरुत्तरस्य सकारस्य मूर्धन्यो भवति । ऊषतुः । ऊषुः । उवसिथ । उवस्थ । वस्ता । सःस्यार्द्धधातुकेति सस्य तः । वत्स्यति । उष्यात् । अवात्सीत् । अवात्ताम् । अवत्स्यत् । वेञ्, तन्तुसन्ताने । वयति वयते ।

## वेञो वयिः ॥ २ । ४ । ४१ ॥

वेञोवयिरादेशो भवति अन्यतरस्यां लिटि परतः । इकार उच्चारणार्थः । उवाय ।

## ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६ । १ । १६ ॥

एषां धातूनां ङिति प्रत्यये परतश्चकारात्किति च सम्प्रसारणं भवति । इति यकारस्य प्राप्ते ।

## लिटि वयो यः ॥ ६ । १ । ३८ ॥

लिटि परतो वयो यस्य सम्प्रसारणं न । ऊयतुः । ऊयुः ।

## वश्चास्यान्यतरस्यां किति ॥ ६ । १ । ३९ ॥

अस्य वयो यकारस्य किति लिटि परतो वकारो भवत्यन्यतरस्याम् । ऊवतुः । ऊवुः । वयस्तासावभावात्थलि नित्य मिट् । उवयिथ । ऊवथुः । स्थानिवद्भावेन ञित्वात्तङ् । ऊये । ऊवे । वयादेशाभावे ।

## वेञः ॥ ६ । १ । ४० ॥

वेञो न सम्प्रसारणं लिटि । ववौ । ववतुः । ववुः । ववे । ववाते । वविरे । वातासि । वातासे । ऊयात् । वासीष्ट । अवासीत् । अवास्त । अवास्यत् । अवास्यत । व्येञ्, सम्वरणे । व्ययति । व्ययते ।

## न व्यो लिटि ॥ ६ । १ । ४६

व्येञ् इत्येतस्य धातोर्लिटि परत आकारादेशो न । विव्याय । विव्यतुः । विव्युः । इडत्त्यर्तीति नित्यमिट् । विव्ययिथ । विव्ये । व्याता । व्यातासि । व्यातासे । वीयात् । व्यासीष्ट । अव्यासीत् । अव्यास्त । ह्वेञ् । स्पर्द्धायां शब्दे च । ह्वयति । ह्वयते ।

## अभ्यस्तस्य च ॥ ६ । १ । ३३ ॥

अभ्यस्तकारणस्य ह्वयतेः प्रागेव द्विर्वचनात् सम्प्रसारणम् । ततोद्वित्वम् । जुहाव । जुहविथ । जुहोथ । जुहुवे । ह्वाता । ह्वास्यति । ह्वास्यते । हूयात्[2] । ह्वासीष्ट ।

## लिपिसिचिह्वश्च ॥ ३ । ५३ ॥

एतेभ्यश्च परस्य च्लेरङादेशो भवति ।

## आत्मनेपदेष्वन्यतरस्याम् ॥ ३ । १ । ५३ ॥

लिपि सिचि ह्व आत्मनेपदेषु परतश्च्लेरङादेशो भवति अन्यतरस्याम् । आतोलोपः । अह्वत् । अह्वत । अह्वास्यत् । अह्वास्यत । वेञादयोऽनुदात्ता उभयपदिनः । अथ द्वौ परस्मैपदिनौ । वद, व्यक्तायां वाचि ।

---

[१] परमपि हलादिः शेषं बाधित्वा यस्य सम्प्रसारणम् । उभयेषांग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां ग्रहयादीनाञ्चानुवृत्त्यैव सिद्धे किं तेन।

[२] कित्वात् सम्प्रसारणे हल इति दीर्घः ।

वदति । उवाद । ऊदतुः । ऊवदिथ । वदिता । वदिष्यति । उद्यात् । वदव्रजेति वृद्धिः । अवादीत् । अवदिष्यत् । टुओश्वि, । गतिवृद्धयोः ।

## विभाषा श्वेः ॥ ६ । १ । ३० ॥

लिटि यङि च श्वयतेर्धातोर्विभाषा सम्प्रसारणं भवति । शुशाव । ( श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः ) तेन लिट्यभ्यासस्येति सम्प्रसारणं न । शिश्वाय । शिश्वियतुः । श्वयिता । श्वयिष्यति । श्वयतु । अश्वयत् । श्वयेत् । शूयात् । जॄस्तम्भिश्वत्यङ् वा ।

## श्वयतेरः ॥ ७ । ४ । १८ ॥

श्वयेतरङ्गस्याकारादेशो भवत्यङि परतः । पररूपम् । अश्वत् । अश्वताम् । अश्वन् । विभाषाधेट्श्व्योरिति । चङ् । इयङ् । अशिश्वियत् । ह्म्यन्तेति न वृद्धिः । अश्वयीत् । अश्वयिष्यत् । वृत् । यजादयोवृत्ताः । भ्वादिस्त्वाकृतिगणः । तेन चुलुम्पतीत्यादि संग्रहः ॥

## ॥ इति शब्विकरणा भ्वादयः ॥

# * अथ अदादिगणः *

### ऋतेरीयङ् ॥ ३ । १ । २९ ॥

ऋतिः सौत्रो धातुर्घृणायां वर्तते, तत ईयङ् प्रत्ययो भवति। जुगुप्सायामयं, कृपायाञ्चेत्येके। सनाद्यन्ता इति धातुत्वम्। शप्। ऋतीयते। ऋतीयाञ्चक्रे। आर्द्धधातुकविवक्षायामायादीनां वैकल्पिकत्वादीयङोऽभावे। शेषात्कर्तरीति परस्मैपदम्। आनर्त। आनर्तिथ। ऋतीयितासे। अर्तिता। अर्तिष्यति। ऋतीयताम्। आर्त्तीयत। ऋतीयेत। ऋतीयिषीष्ट। ऋत्यात्। आर्त्तीयिष्ट। आर्तीत्। आर्त्तिष्यत्। आर्त्तीयिष्यत। अद, भक्षणे।

### अदिप्रभृतिभ्यः शपः ॥ २ । ४ । ७२ ॥

अदि प्रभृतिभ्य उत्तरस्य शपो लुग्भवति। अत्ति। अत्तः। अदन्ति।

### लिट्यन्यतरस्याम् ॥ २ । ४ । ४० ॥

लिटि परतोऽदोऽन्यतरस्यां घस्लादेशो भवति। जघास। गमहनेत्युपधालोपः। तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद्घस्य चर्त्वम्। शासिवसीतिषत्वम्। जक्षतुः। जक्षुः। जघसिथ। जक्षथुः। जक्ष। जघास। जघस। जक्षिव। जक्षिम। आद। इडत्त्यर्तीति नित्यमिट्[१]। आदिथ। अत्ता। अत्स्यति। अत्तु।

### हुझल्भ्यो हेर्धिः ॥ ६ । ४ । १०१ ॥

---

[१] घस्लादेशस्य तासावसत्त्वान्नित्यमिट्।

हु इत्येतस्माद्  झलन्तेभ्यश्चोत्तरस्य हलादेर्हेः स्थाने धिरादेशोभवति । अद्धि । अत्तात् । अदानि । अदाव । अदाम ।

### अदः सर्वेषाम् ॥ ७ । ३ । १०० ॥

अस्मादुत्तरस्यापृक्तस्य सार्वधातुकस्याडागमो भवति सर्वेषामाचार्याणां मतेन । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्याताम् । अद्युः । अद्यात् । अद्यास्ताम् । अद्यासुः ।

### लुङ्सनोर्घस्लृ ॥ २ । ४ । ३७ ॥

लुङि सनि च परतोऽदो घस्लृ आदेशो भवति । लृदित्त्वादङ् । अघसत् । आत्स्यत् । हन, हिंसागत्योः । हन्ति । प्रणिहन्ति ।

### अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥ ६ । ४ । ३७ ॥

अनुदात्तोपदेशानामङ्गानां वनतेस्तनोत्यादीनां चानुनासिकलोपो झलादौ क्ङिति प्रत्यये परतः । अनुनासिकेतिलुप्तषष्ठीकम् । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशा अनुनासिकान्ताः । तनु, षणु, क्षणु, क्षिणु, ऋणु, तृणु, घृणु, वनु, मनु, तनोत्यादयः । हतः । घ्नन्ति ।

### वमोर्वा ॥ ८ । ४ । २३ ॥

वकारमकारयोः परतो हन्तिनकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति । प्रहण्मि । प्रहन्मि । प्रहण्वः । प्रहन्व । होहन्तेरितिकुत्वम् । जघान । जघ्नतुः । जघ्नुः ।

### अभ्यासाच्च ॥ ७ । ३ । ५५ ॥

अभ्यासादुत्तरस्य हन्तिहकारस्य कवर्गादेशो भवति । जघनिथ । जघन्थ । हन्ता । ऋद्धनोरितीट् । हनिष्यति । हन्तु । हतात् । हताम् । घ्नन्तु ।

## हन्तेर्जः ॥ ६ । ४ । ३६ ॥

हन्ते र्धातो र्ज इत्ययमादेशो भवति हौ परतः । अभीयतया जस्यासिद्धत्वान्नहेर्लुक् । जहि । हतात् । हतम् । हत । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म । हन्यात् । हन्याताम् । हन्युः । आर्धधातुक इत्यधिकृत्य

## हनो वध लिङि ॥२ । ४ । ४२ ॥

हन्तेर्धातोर्वध इत्ययमादेशो भवति लिङि परत आर्धधातुके । वधादेशोऽदन्तः । आर्द्धधातुके, इतिविषयसप्तमी । अतोलोपः । वध्यात् । वध्यास्ताम् । वध्यासुः ।

## लुङि च ॥ २ । ४ । ४३ ॥

लुङि च परतो हनो वध इत्ययमादेशो भवति । अवधीत् । अल्लोपस्य स्थानिवत्त्वादतोहलादेरिति न वृद्धिः । अहनिष्यत् । अदहनी अनुदात्तावुदात्तेतौपरस्मैपदिनौ । अथ चत्वारः स्वरितेतः । द्विष अप्रीतौ । द्वेष्टि । द्विष्टे । दिद्वेष । दिद्विषे । द्वेष्टासि । द्वेष्टासे । द्वेक्ष्यति । द्वेक्ष्यते । द्वेष्टु । द्विष्टाम् । द्विड्ढि । अद्वेट् । अद्विष्टाम् ।

## द्विषश्च ॥ ३ । ४ । ११२ ॥

द्विषः परस्य लङादेशस्य झेर्जुसादेशो भवति शाकटायनस्याचार्यस्य मतेन । अद्विषुः । अद्विषन् । अद्विष्ट । द्विष्यात् । द्विषीत । द्विष्यात् । द्विक्षीष्ट । अद्विक्षत् । अद्विक्षत । अद्वेक्ष्यत् । अद्वेक्ष्यत । दुह, प्रपूरणे । दादेर्धातोरिति घः । दोग्धि । दुग्धः । दुहन्ति । धोक्षि । दुग्धः । दुग्ध ।

दोह्मि । दुह्वः । दुह्मः । दुग्धे । धुक्षे । दुदोह । दुदुहे । दोग्धा । धोक्ष्यति । धोक्ष्यते । दोग्धु । दुग्धि । दोहानि । धुक्ष्व । धुग्ध्वम् । दोहै । अधोक् । अदोहम् । अधुग्ध्वम् । अधुक्षत् । अधुक्षत । लुग्वा दुहदिहेतिपक्षे, तथा सध्वंवंहिषु लङ्वदपि । दिह, उपचये । देग्धि । दिग्धे । नेर्गदेतिणत्वम् । प्रणिदेग्धि । लिह, आस्वादने । लेढि । लीढे । लिलेह । लिलिहे । लेढासि । लेढासे । लेक्ष्यति । लेक्ष्यते । लेढु । लीढि । अलेट् । अलिक्षत् । अलिक्षत । अलीढ । अलिह्वहि । अलिक्षावहि । अलिक्षामहि । अलेक्ष्यत् । अलेक्ष्यत । चक्षिङ्, व्यक्तायां वाचि । अयं दर्शनेऽपि । इकारोऽनुदात्तो "ऽनुदात्तेतश्चहलादे" रिति युजर्थः । विचक्षणः प्रथयन् । नुमुतुन, अन्तेदित इतिव्याख्यानात् । चष्टे । चक्षाते । चक्षते । आर्द्धधातुके इत्यधिकृत्य ।

## चक्षिङः ख्याञ् ॥ २ । ३ । ५४ ॥

चक्षिङः ख्याञादेशो भवति आर्धधातुके विषये ।

## वा लिटि ॥ २ । ४ । ५५ ॥

लिटि परतश्चक्षिङः ख्याञादेशो वा भवति । प्राप्तविभाषेयम् । ( ख्शादिर्वा ) अत्रैवभाष्ये । ( असिद्धे ) ( असिद्धकाण्डे ) ( शस्य यवचनं विभाषा ) ञित्त्वात्पदद्वयम् । चख्यौ । चख्ये । चक्शौ । चक्शे । चयोद्धितीयाइति तु न । चर्त्वस्य, असिद्धत्वात् । चचक्षे । ख्याता । क्शाता । ख्यास्यति । ख्यास्यते । क्शास्यति । क्शास्यते । चष्टाम् । अचष्ट । चक्षीत । ख्यायात् । ख्येयात् । क्शायात् । क्शेयात् ।

## अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ३ । १ ५२ ॥

[ १ ] एतद्वचनं णत्वप्रकरणानन्तरबोध्यं, तेन पर्याख्यानमित्यत्र कृत्यचइतिणत्वं न ।

एभ्य परस्य च्लेरङादेशो भवति । अख्यत् । अख्यत । अक्शासीत् । अक्शास्त । अख्यास्यत् । अक्शास्यत । अक्शास्यत् । ( वर्जनेक्शावः प्रतिषेधः ) समचक्षिष्टेत्यादि । अथ पृच्यन्ता अनुदात्तेतः षोडश । ईर, गतौ कम्पने च । ईर्ते । ईराञ्चक्रे । ईरिता । ईरिष्यते ईर्ताम् । ईर्ष्व । ईर्ध्वम् । ऐर्त । ईरीत । ईरिषीष्ट । ऐरिष्ट । ईड, स्तुतौ । ईट्टे ।

## ईशः से ॥ ७ । २ । ७७ ॥

ईश उत्तरस्य से इत्येतस्य सार्वधातुकस्य इडागमो भवति ।

## ईडजनो ध्वे च ॥ ७ । २ । ७८ ॥

ईड जन, इत्येताभ्यामुत्तरस्य ध्वे इत्येतस्य से इत्येतस्य च सार्वधातुकस्य इडागमो भवति । योगविभागोवैचित्र्यार्थः । ईडिषे । ईडिध्वे । ईडांचक्रे । एकदेशविकृतस्यानन्यत्वात्, ईडिष्व । ईडिध्वम् । ऐट्ट । विकृतिग्रहणेनप्रकृतेरग्रहणात् । ऐड्ढ्वम् । ईश, ऐश्वर्ये । ईष्टे । इशिषे । ईशिध्वे । ईशांचक्रे । इत्यादि । आस, उपवेशने । आस्ते । दयायासश्चेत्याम् । आसाञ्चक्रे । आसिता । आसिष्यते । आस्ताम् । आस्त । आध्वम् । आसिष्ट । आङः शासु, इच्छायाम् । आशास्ते । आशासाते, आशासिष्ट । प्रायेणायमाङ्पूर्वः । तेन नमोवाकं प्रशास्महे, इत्यादिसिद्धम् । वस, आच्छादने । वस्ते । वसाते । वसते । वस्से । वध्वे । ववसे । वसिता । वसिष्यते । वस्ताम् । अवसिष्ट । अवसिष्यत । कसि, गतिशासनयोः । कंस्ते । कस, इत्यन्ये । कस्ते । चकसे । कश, इत्येके । व्रश्चेति षत्वे । कष्टे । कशाते । चकशे । कक्षे । कड्ढ्वे । णिसि, चुम्बने । निंस्ते । निनिंसे । निंस्ताम् । निंस्व । निन्ध्वम् । अनिंस्त । निंसीत । निंसिषीष्ट । अनिंसिष्यत । णिजि, शुद्धौ । निङ्क्ते ।

[ १ ]--ध्वेइत्यस्यपूर्वत्रापकर्षः, सेइत्यस्योत्तरत्रानुवृत्तिरितिवैचित्र्यम्

निङ्क्ते । निङ्जिता । शिजि, अव्यक्ते शब्दे । शिङ्क्ते । शिशिङ्जे । पिजि, वर्णे । पिङ्क्ते । सम्पर्चनइत्येके । उभयत्र, इत्यन्ये । अवयव इत्यपरे । अव्यक्ते शब्दे इतीतरे । पृजी, इत्येके । पृक्ते । वृजी, वर्जने । वृक्ते । ववृजे । वर्जिता । वर्जिष्यते । वृक्ताम् । वृत्व । वृग्ध्वम् । अवृक्त । वृजीत । वर्जिषीष्ट । अवर्जिष्ट । अवर्जिष्यत । पृची, सम्पर्चने । पृक्ते । पृचाते । षूङ्, प्राणिगर्भविमोचने । सूते । सुवाते । सुषुवे । सुषुविषे । सोता । सविता । सोष्यते । सविष्यते । भूसुवोरिति गुणनिषेधः । सुवै । सोषीष्ट । सविषीष्ट । असविष्ट । असोष्ट । शीङ्, स्वप्ने ।

## शीङः सार्वधातुके गुणः ॥ ७ । ४ । २१ ॥

शीङोऽङ्गस्य सार्वधातुके परतो गुणो भवति । क्ङितिचेत्यस्यापवादः । शेते । शयाते ।

## शीङोरुट् ॥ ७ । १ । ६ ॥

शीङोऽङ्गादुत्तरस्य झादेशस्यातो रुडागमो भवति । शेरते । शेषे । शेध्वे । शये । शेवहे । शेमहे । शिश्ये । शिश्यिध्वे । शयिता । शयिष्यते । शयिषीष्ट । अशयिष्ट । अशयिष्यत । अथ कौत्यन्ताः परस्मैपदिनः । ऊर्णुस्तूभयपदी । यु, मिश्रणे अमिश्रणे च ।

## उतो वृद्धिर्लुकि हलि ॥ ७ । ३ । ८९ ॥

उकारान्तस्याङ्गस्य वृद्धिर्भवति लुकि सति हलादौ पिति सार्वधातुके यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । युयुवतुः । युयुवुः । यविता । युयात् । यूयात् । अयावीत् । अयविष्यत् । रु, शब्दे ।

## तुरुस्तुशम्यमः सार्वधातुके ॥ ७ । ३ । ९५ ॥

एभ्यः परस्य सार्वधातुकस्य हलादेर्वा ईडागमो भवति । नाभ्यस्तस्येत्यतोऽनुवृत्तिसम्भवेऽपि पुनः सार्वधातुकग्रहणमपिदर्थम् । रवीति । रौति । उवङ् । रुवीतः । रुतः । हलादेः किम् । रुवन्ति । तिङः किम् । शाम्यति । रवीषि । रौषि । रुवीथः । रुथः । रुवीथ । रुथ । रवीमि । रौमि । रुवीमः । रुमः । रवीतु । । रौतु । सार्वधातुके किम् । आशिषि-रूयात् । विध्यादौ तु रुयात् । रुवीयात् । अरावीत् । अरविष्यत् । तौतीत्यादि, रौतीत्यादिवदुदाहार्य्यम् । तौतेरनिट्त्वात् , तोता । तोष्यतीत्यादि । णु, स्तुतौ । नौति । नुनाव । नविता । इत्यादि यौतिवत् । टुक्षु, शब्दे । क्षौति । चुक्षाव । क्ष्णु, तेजने । क्ष्णौति । क्ष्णविता । ष्णु, प्रस्रवणे । स्नौति । सुष्णाव । स्नविता । ऊर्णुञ्, आच्छादने ।

## ऊर्णोतेर्विभाषा ॥ ७ । ३ । ९० ॥

उर्णोतेर्विभाषा वृद्धि र्भवति हलादौ पिति सार्वधातुके । ऊर्णौति । ऊर्णोति । ऊर्णुतः । उर्णुवन्ति । ऊर्णौषि । ऊर्णोषि । उर्णुते । ऊर्णुवाते । ऊर्णुवते । ( वाच्यऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेड्डुपग्रहात् ) । अत ऊर्णोतेराम् न ।

## नन्द्राः संयोगादयः ॥ ६ । १ । ३ ॥

नकारदकाररेफा द्वितीयैकाचोऽवयवभूताः संयोगादयो न द्विरुच्यन्ते । अजादेर्द्वितीयस्येति नुशब्दस्य द्विर्वचनम् । रेफस्य तु नन्द्रा इति न भवति । नोपधोऽयम् । णत्वन्तु सांहितिकम् तच्च द्विर्वचनेऽसिद्धमितिकृते द्विर्वचने पूर्वस्य णत्वं परस्य तु व्यवधानान्न भवति । पूर्वत्रासिद्धीयमद्विर्वचनइत्येतदुभौसाभ्यासस्येतिलिङ्गान्न प्रवर्तते । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः ।

## विभाषोर्णोः ॥ १ । २ । ३ ॥

ऊर्णोतेः पर इडादिप्रत्ययो विभाषा ङिद्भवति । ऊर्णुनुविथ । ऊर्णुनविथ । ऊर्णुनुविषे । ऊर्णुनविषे । ऊर्णुविता । ऊर्णविता । ऊर्णुविष्यते । ऊर्णविष्यते । ऊर्णोतु । ऊर्णौतु । ऊर्णवानि । ऊर्णुताम् ।

## गुणोऽपृक्ते ॥ ७ । ३ । ९१ ॥

ऊर्णोतेर्द्धातोरपृक्ते हलि पिति सार्वधातुके गुणो भवति । वृद्धयपवादः । और्णोत् । और्णोः । और्णुत । ऊर्णुयात् । ऊर्णुवीत । और्णुवीत् । और्णुविष्टाम् ।

## ऊर्णोतेर्विभाषा ॥ ७ । २ । ६ ॥

ऊर्णोतेरिडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्भवति । पक्षे गुणः । और्णावीत् । और्णवीत् । और्णुविष्यत् । और्णविष्यत् । और्णुविष्यत । और्णविष्यत । द्यु, अभिगमने । द्यौति । दुद्याव । दुद्यविथ । दुद्योथ । द्योता । द्योष्यति । षु, प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । सौति । सोता । असौषीत् । कु, शब्दे । कौति । चुकाव । चुकविथ । चुकोथ । कोतेत्यादि । ष्टुञ्, स्तुतौ स्तौति । स्तवीति । स्तुतः । स्तुवीतः । स्तुते । स्तुवीते । तुष्टाव । तुष्टोथ । स्तोतासि । स्तोतासे । स्तोष्यति । स्तोष्यते । स्तुसुधूञ्भ्यइतीट् । अस्तावीत् । ब्रूञ्, व्यक्तायां वाचि ।

## ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ ३ । ४ । ८४ ॥

ब्रुवः परस्य लटः परस्मैपदानां पञ्चानामादिभूतानां पञ्चैव णलादय आदेशा भवन्ति, तत्सन्नियोगेन च ब्रुव आहशब्द आदेशो भवति ।

## आहस्थः ॥ ८ । २ । ३५ ॥

आहो हकारस्य थकारादेशो भवति झलि परतः । आत्थ । आहथुः ।

## ब्रुव ईट् ॥ ७ । ३ । ९३ ॥

ब्रू इत्येतस्मादुत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो भवति ब्रवीति । ब्रूतः। ब्रुवन्ति। ब्रूते।

## ब्रुवोवचिः ॥ २ । ४ । ५३ ॥

ब्रुवोवचिरादेशो भवति आर्द्धधातुकविषये । उवाच। ऊचतुः । ऊचुः। उवचिथ। उवक्थ। ऊचे। ऊचाते। ऊचिरे । वक्तासि। वक्तासे । वक्ष्यति । वक्ष्यते । ब्रवीतु । ब्रूतात्। ब्रवाणि। ब्रवै। ब्रूयात्। उच्यात्। अस्यतीत्यङ्।

## वच उम् ॥ ७ । ४ । २० ॥

वचेरङ्गस्य अङि परत उमागमो भवति। अवोचत् । अवोचत। अवक्ष्यत्। अवक्ष्यत। अथ शास्त्यन्ताः परस्मैपदिनः। इङ् त्वात्मनेपदी। इण् गतौ। एति। इतः।

## इणो यण् ॥ ६ । ४ । ८१ ॥

इणोऽङ्गस्य यणादेशो भवति अचि परतः ' इयङोऽपवादः । यन्ति। इयाय ।

## दीर्घइणः किति ॥ ७ । ४ । ६९ ॥

इणोऽङ्गस्य योऽभ्यासस्तस्य दीर्घो भवति किति लिटि परतः। ईयतुः। ईयुः। इययिथ । इयेथ। एता। एष्यति। एतु। इतात् । इहि अयानि। ऐत्। आयन् । इयात् । ईयात्।

## एतेर्लिङि ॥ ७ । ४ । २४ ॥

एतेरङ्गस्योपसर्गादुत्तरस्य लिङि यकारादौ क्ङिति परतो ह्रस्वो भवति । उदियात् । समियात् । अन्वियात् । उभयत आश्रयणे नान्तादिवत् । अभीयात् । अण इत्येव, नेह, समेयात् ।

## इणो गा लुङि ॥ २ । ४ । ४५ ॥

इणो गा इत्ययमादेशो भवति लुङि परतः । गातिस्थेति सिचो लुक् । अगात् । अगाताम् । अगुः । इङ्, अध्ययने । नित्यमधिपूर्वः । अधीते । अधीयाते । अधीयते ।

## गाङ् लिटि ॥ २ । ४ । ४९ ॥

गाङादेशो भवतीङो लिटि परतः । अधिजगे । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अधीताम् । अध्ययै । अध्ययावहै । अध्ययामहै । आटि गुणायादेशयोरुपसर्गस्य यणादेशः । पूर्वं धातोरुपसर्गेण योगेऽपि गुणात्पूर्वमन्तरङ्गत्वेन सवर्णदीर्घो न । प्रत्ययः, णेरध्ययने वृत्तम्, इत्यादिनिर्देशात् । अध्यैत । अध्यैयाताम् । अध्यैयत । झस्यादादेशः । अधीयीत । अधीयीयाताम् । अधीयीरन् । अधीयीध्वम् । अध्येषीष्ट ।

## विभाषा लुङ्लृङोः ॥ २ । ४ । ५० ॥

लुङि लृङि च परत इङो विभाषा गाङादेशो भवति ।

---

[ १ ] पूर्वंधातुः साधनेन (कारकेण) युज्यते, पश्चादुपसर्गेणेति 'सट्कात्पूर्वं' इति सूत्रेभाष्ये सिद्धान्तितत्वादितिभावः ।

[ २ ] अजादौ परत्वादियङि पश्चादाटि वृद्धावुपसर्गस्य यणादेशः ।

## गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ १ । २ । १ ॥

एतेभ्यो गाङ्कुटादिभ्यः परेऽञ्णितः प्रत्यया ङितो भवन्ति । ङिद्वद्भवन्तीत्यर्थः ।

## घुमास्थागापाजहातिसां हलि ॥ ६ । ४ । ६६ ॥

घुसंज्ञकानामङ्गानां मा स्था गा पा जहाति सा इत्येतेषां हलादौ क्ङिति प्रत्यये परत ईकारादेशो भवति । अध्यगीष्ट । अध्यैष्ट । अध्यगीष्यत अध्यैष्यत । इक्, स्मरणे । अयमप्यधिपूर्वः । अधीगर्थदयेशामितिलिङ्गात् । अन्यथाहीगर्थेत्येवब्रूयात् । इणवदिक इतिवचनाद्व इणोयण्, इणोगालुङि इत्यपि । अधियन्ति[२] । अध्यगादित्यादि । वी, गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । प्रजनं गर्भग्रहणम् । वेति । वीतः । वियन्ति । वेषि । विवाय । विवयिथ । विवेथ । वेता । वेष्यति । वेतु । अवेत् । अवियन् । अडागमे । सत्यनेकाच्त्वाद्वयणिति केचित् । अव्यन् । अवैषीत् । अवेष्यत् । अत्र प्रश्लिष्टनिर्देशात्, ई इत्यपि धातुमाहुः । एति । ईतः । इयन्ति । ईयात् । ईयाताम् । ऐषीदित्यादि । या, प्रापणे । प्रापणमिह गतिः । प्रणियाति । नेर्गदेति णत्वम् । यातः । यान्ति । ययौ । ययतुः । ययुः । ययिथ । ययाथ । याता । यातु । अयात् । अयाताम् ।

## लङः शाकटायनस्यैव ॥ ३ । ४ । १११ ॥

आकारान्तादुत्तरस्य लङादेशस्य झेर्जुसादेशो वा भवति । अयुः । अयान् यायात् । अयासीत् । अयास्यत् । वा, गतिगन्धनयोः । गन्धनसूचनम् ।

---

[१] गाङिति इङादेशोगृह्यते न गाङ् गताविति । कुटादयोऽपि कुटकौटिल्य इत्येतदारभ्य यावत् कुङ् शब्दे इति ।

[२] केचित्तु 'इणोगा लुङि' इत्यतिदेशकार्यार्थमेव 'इणवदिक' इत्यतिदेशमिच्छन्ति तन्मतेइयङि अधीयन्तीति पक्षान्तरमाह मैत्रेयः ।

वातीत्यादि यातिवत् । भा दीप्तौ । ष्णा, शौचे । स्नाति । सस्नौ । श्रा, पाके । द्रा, कुत्सायां गतौ । प्सा, भक्षणे । पा, रक्षणे, पायास्ताम् । अपासीत् । अपास्यत् । रा, दाने । ला, श्रदाने । दाप्, लवने । प्रणिदाति । प्रनिदाति । दायात् । अदासीत् । ख्या, प्रकथने । अयं सार्वधातुक एव प्रयोक्तव्यः । संस्थानत्वं नमः ख्यात्रेइतिवार्तिकं तद्भाष्यञ्चेह लिङ्गम् । संस्थानोजिह्वामूलीयः स इह नेति ख्याञादेशस्य खशादित्वे प्रयोजनमित्यर्थः । ख्याति । ख्यायात् । प्रा, पूरणे । प्राति । प्रेयात् । प्रायात् । अप्रासीत् । मा, माने । माति । घुप्रकृतिमाङिति भाष्येपाठात्, नेर्गदेत्यत्र नास्य ग्रहणम् । ममौ । ममिथ । ममाथ । अमात् । मेयात् । अमासीत् । अमास्यत् । वच, परिभाषणे । वक्ति । वक्तः । अयमन्ति परो न प्रयुज्यते । वहुवचनपरे, इत्यन्ये । झिपरे इत्यपरे । वक्षि । वक्थः । वच्मि । सम्प्रसारणम् । उवाच । ऊचतुः । ऊचुः । उवचिथ । उवक्थ । वक्ता । वक्ष्यति । वक्तु । वग्धि । अवक् । वच्यात् । उच्यात् । अङ् । अवोचत् । अवक्ष्यत् । इण्प्रभृतयोऽनुदात्ताः परस्मैपदिनः समाप्ताः । विद, ज्ञाने ।

## विदो लटो वा ॥ ३ । ४ । ८३ ॥

विद ज्ञाने, अस्माद्धातोः परेषां लडादेशानां परस्मैपदानां णलादयो नव विकल्पेनादेशा भवन्ति । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे । वेत्ति । वित्तः । विवेद । विविदतुः । विविदुः । उपविदेत्याम्प्रत्ययो वा । विदेत्यकरान्तनिपातनान्न लघूपधगुणः । विदाञ्चकार । वेदिता । वेदिष्यति ।

## विदाङ्कुर्वन्त्वि (१) त्यन्यतरस्याम् ॥ ३ । १ । ४१ ॥

---

[ १ ] इति शब्दोऽत्रप्रकारे, एवं जातीयक इत्यर्थः । अतएव "विदाङ्कुरु श्रीमति पुत्रि नोगिरः" इति वासुदेवविजयेप्रायोजि ।

विदेर्लोट्याम्प्रत्ययो गुणाभवो लोटो लुक्, कृञश्च लोट्परस्यानु प्रयोगः । पुरुष वचने न विवक्षिते इति शब्दात् । "तनादिकृञ्भ्यउः" इत्युः । विदाङ्करोतु इत्यादि । वेत्तु । वित्तात् । विद्धि । अवेत् । सिजभ्यस्तेतिभ्रेर्जुस् । अविदुः ।

## दश्च ॥ ८ । २ । ७५ ॥

दकारान्तस्य धातोः पदस्य सिपि परतो रुर्भवति दकारो वा । अवेः । पक्षे । अवेत् । विद्यात् । विद्युः । विद्यास्ताम् । अवेदीत् । अवेदिष्यत् । अस, भुवि । अस्ति ।

## श्नसोरल्लोपः ॥ ६ । ४ । १११ ॥

श्नस्यास्ते श्चाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः । स्तः । सन्ति । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ।

## अस्तेर्भूः ॥ २ । ४ । ५२ ॥

अस्तेर्धातोर्भू इत्ययमादेशो भवति आर्द्धधातुके । बभूव । भविता । भविष्यति । अस्तु । स्तात् । स्ताम् । सन्तु ।

## घ्वसोरेद्धावभ्यासलोपश्च ॥ ६ । ४ । ११९ ॥

घुसंज्ञकानामङ्गानामस्तेश्च एकारादेशो भवति हौ परतोऽभ्यसलोपश्च । आभीयत्वेनैत्वस्यासिद्धत्वाद्धेर्धिः । श्नसोरित्यल्लोपः । एधि स्तात्[१] । स्तम् । स्त । असानि । असाव । असाम । अस्तिसिचइतीट्[२] । आसीत् । आस्ताम् । आसन् । आसीः । आस्तम् । आस्त । आसम् । आस्व । आस्म । स्यात् । स्याताम् । स्युः । भूयात् । अभूत् ! अभविष्यत् ।

---

[१] तातङ् पक्षे एत्वं न, परेण तेन बाधात् । कृते तु तातङि स्थानिवत्वेनापि न । सकृद्गताविति न्यायादिति माधवः ।

[२] अल्लोपस्यासिद्धत्वादाडागमः ।

## उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ॥ ८ । ३ । ८७ ॥

उपसर्गस्थान्निमित्तात्प्रादुस् शब्दाच्चोत्तरस्य यकारपरस्याच्परस्य चास्तिसकारस्य मूर्धन्यो भवति । विषन्ति । प्रादुःषन्ति । विष्यात् । प्रादुःष्यात् । यच्परःकिम् । अभिस्तः । मृजू, शुद्धौ ।

## मृजेर्वृद्धिः[1] ॥ ७ । २ । ११४ ॥

मृजेरङ्गस्य इको वृद्धिर्भवति । मार्ष्टि । मृष्टः । ( इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते ) मार्जन्ति । मृजन्ति । मार्क्षि । मृष्ठः । मृष्ठ । मार्ज्मि । मृज्वः । मृज्मः । ममार्ज । ममार्जतुः । ममृजतुः । ममार्जुः । ममृजुः । ममार्जिथ । ममार्ष्ठ । मार्जिता । मार्ष्टा । मार्जिष्यति । मार्क्ष्यति । मार्ष्टु । मार्जन्तु । मृजन्तु । हुझल्भ्यइतिहेर्द्धिः । षत्वष्टुत्वजश्त्वानि । मृड्ढि । अमार्ट् । मृज्यात् । अमार्जीत् । अमार्क्षीत् अमार्क्ष्यत् । रुदिर्, अश्रुविमोचने ।

## रुदादिभ्यः सार्वधातुके ॥ ७ । २ । ७६ ।

रुदादिभ्य उत्तरस्य वलादेः सार्वधातुकस्य इडागमो भवति । रोदिति । रुदितः । रुदन्ति । रुरोद । रोदिता । रोदिष्यति । रोदितु । हौ परत्वादिटि धित्वन्न । रुदिहि ।

## रुदश्च पञ्चभ्यः ॥ ७ । ३ । ९८ ॥

रुदादिभ्यः परस्य सार्वधातुकस्यहलादेरपृक्तस्य ईडागमो भवति । अरोदीत् । अरोदीः ।

---

[ १ ] सूत्रं धातोः कार्यमुच्यमानमितिपरिभाषया धातुप्रत्यये प्रवर्तते, तेन परिमृड्भ्यामित्यादौ नेति नागेशः ।

[ २ ] संक्रमो गुणवृद्धिप्रतिषेधविषयः ।

## अड गार्ग्यगालवयोः ॥ ७ । ३ । ९९ ॥

रुदादिभ्यः पञ्चभ्यः परस्य अपृक्तस्य सार्वधातुकस्याडागमो भवति गार्ग्यगालवयोर्मतेन । अरोदत् । अरुदिताम् । अरुदन् । अरोदीः । अरोदः । अत्र रुदादिप्रकृतिं प्रत्ययविशेषञ्चापेक्षमाणाभ्यामडीड्भ्यां लिङ्मात्रापेक्षत्वेनान्तरङ्गत्वात्पूर्वमेव यासुटि अपृक्तत्वाभावान्न तौ । रुद्यात् । आशिषि । रुद्यात् । रुद्यास्ताम् । इरितोवेत्यङ् । अरुदत् । तदभावे सिच् । अरोदीत् । ञिष्वप् , शये । रुदादिभ्यइतीट् । स्वपिति । स्वपितः । स्वपन्ति । सुष्वाप । सुषुपतुः । सुषुपुः । सुष्वपिथ । सुष्वप्थ ।

## सुविनिर्दुर्भ्यः सुपिसूतिसमाः ॥ ॥ ८ । ३ । ८८ ॥

सु वि निर् दुर् इत्येतेभ्य उत्तरस्य सुपि सूति सम इत्येतेषां सकारस्य मूर्धन्यादेशो भवति । सुषुषुपतुः । सुषुषुपुः । सुषुष्वाप । सुषुप्ता । स्वप्स्यति । स्वपितु । अस्वपत् । अस्वपीत् । स्वप्यात् । सुप्यात् । अस्वाप्सीत् । अस्वप्स्यत् । श्वस, प्राणने । श्वसिति । शश्वास । श्वसिता । श्वसिष्यति । श्वसितु । अश्वसीत् । अश्वसत् । श्वस्यात् । ह्मयन्तेति नवृद्धिः । अश्वसीत् । अश्वसिष्यत् । अन च । अनिति । आन । अनिता । अनिष्यति । आनीत् । आनत् । आनीः । आनः ।

## अनितेः ॥ ८ । ४ । १९ ॥

---

[ १ ] अकिद्वचनेऽभ्यासस्य सम्प्रसारणे पूर्वत्रासिद्धमिति षत्वस्यासिद्धत्वात् पूर्वं हलादिः शेषे पश्चात्सुपिरूपस्याभावात् 'सुविनिर्दुर्भ्यः' इति न षत्वम् । किति तु परत्वात्सम्प्रसारणे षत्वे च पश्चाद्द्विर्वचनमिति सुषुषुपतुरित्यादि । पूर्वत्रासिद्धीयमद्विर्वचने इति नासिद्धत्वम् इति माधवः ।

अनितेर्नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति । प्राणिति । आनिष्यत् । जक्ष, भक्ष, हसनयोः । जक्षिति । जक्षितः । जक्षित्यादय इत्यभ्यस्तसंज्ञा ।

## अदभ्यस्तात् ॥ ७ । १ । ४ ॥

अभ्यस्तादङ्गादुत्तरस्य झकारस्य अदित्ययमादेशो भवति । अन्तापवादः । जक्षति । जक्षिषि । जजक्ष । जजक्षिथ । जक्षिता । जक्षिष्यति । जक्षतु । अजक्षत् । अजक्षिताम् । सिजभ्यस्तेति झेर्जुस् । अजक्षुः । जक्ष्यात् । अजक्षीत् । अजक्षिष्यत् । रुदादयः पञ्च समाप्ताः । जागृ, निद्राक्षये । जागर्ति । जागृतः । जाग्रति । उषविदेत्याम्वा । जागराञ्चकार । जागराम्बभूव । जागरामास । जजागार ।

## जाग्रोऽविचिण्णल्ङित्सु ॥ ७ । ३ । ८५ ॥

जागृ इत्येतस्याङ्गस्य गुणो भवति अविचिण्णल्ङित्सु परतो वृद्धिविषये[1] प्रतिषेधविषये च । जजागरतुः । जजागरुः । जजागरिथ । जागरिता । जागरिष्यति । जागर्तु । अजागः । अभ्यस्तत्वाज्जुस् ।

## जुसि च ॥ ७ । ३ । ८३ ॥

जुसि च प्रत्यये परत इगन्ताङ्गस्य गुणो भवति । अजागरुः । अजागः । अजागरम् । जागृयात् । जागर्यात्[2] । अजागरीत्[3] । अजागरिष्टाम् । अजागरिष्यत् । दरिद्रा, दुर्गतौ । दरिद्राति ।

---

[१] जागरकः । जागरः । जागरयति । अत्र वृद्धिविषयः ।
[२] पूर्वविप्रतिषेधेन रिङं बाधित्वा गुणः ।
[३] अत्र जागृ इस् इत्यवस्थायां यण्प्राप्तः, तं सार्वधातुकगुणो बाधते, तं सिचिवृद्धिः । तां जागर्ति गुणः, तत्र कृते हलन्तलक्षणा वृद्धिः प्राप्ता, नेटीतिनिषिद्धा, ततोऽतो हलादेरिति बाधित्वाऽतोल्रान्तस्येति प्राप्ता, ह्मयन्तेति निषिध्यते । तदाहुः गुणो वृद्धि र्गुणो वृद्धिः प्रतिषेधो विकल्पनम् । पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव ।

## इद्दरिद्रस्य ॥ ६ । ४ । ११४ ॥

दरिद्रातेर्हलादौ सार्वधातुके क्ङिति परत इकारादेशो भवति । दरिद्रितः ।

## श्नाभ्यस्तयो रातः ॥ ६ । ४ । ११२ ॥

श्ना इत्येतस्याभ्यस्तानां चाङ्गानामाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः । दरिद्रति । अनेकाच्त्वादाम् । दरिद्राञ्चकार । ददरिद्रतुः । ददरिद्रुः । ( दरिद्रातेरार्द्धधातुके लोपो वक्तव्यः ) ददरिद्रिथ । दरिद्रिता । दरिद्रिष्यति । दरिद्रातु । अदरिद्रात् । अदरिद्रिताम् । दरिद्रियात् । दरिद्र्यात् [ अद्यतन्यां वेति वक्तव्यम् ] अदरिद्रीत् । अदरिद्रासीत् । अदरिद्रिष्यत् । [ का० ] न दरिद्रायके लोपो दरिद्राणे च नेष्यते । दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥ चकासृ, दीप्तौ । चकास्ति । चकासाञ्चकार । चकासिता । चकासिष्यति । चकास्तु । चकासतु । चकाधि । धिचेति सलोपः । चकासानि ।

## तिप्यनस्तेः ॥ ८ । २ । ७३ ॥

तिपिः परतः सकारान्तस्य पदस्य अनस्तेर्दकार आदेशो भवति । अचकात् । अचकाद् । अचकासुः ।

## सिपि धातो रुर्वा ॥ ८ । २ । ७४ ॥

सिपि परतः सकारान्तस्य पदस्य धातोरु इत्ययमादेशो भवति दकारो वा । अचकाः । अचकाद् । अचकासीत् । अचकासिष्यत् । शासु, अनुशिष्टौ । शास्ति ।

---

[ १ ] अद्यतनीति प्राचां लुङः संज्ञा ।

## शास इदङ्हलोः ॥ ६ । ४ । ३४ ॥

शास[1] उपधाया इकारादेशो भवति अङि परतो हलादौ च क्ङिति। शिष्टः । शासति । शास्सि । शिष्ठः । शिष्ठ । शास्मि । शिष्वः । शिष्मः । शशास । शशासतुः । शशासुः । शासिता । शासिष्यति । शास्तु । शिष्टात् । शिष्टाम् । शासतु ।

## शा हौ ॥ । ६ ४ । ३५ ॥

शासो हौ परतः शा इत्ययमादेशो भवति । आभीयत्वेनासिद्धत्वा-द्धेर्धिः । शाधि । शिष्टात् । शिष्टम् । शिष्ट । शासानि । अशात् । अशिष्टाम् । अशासुः । अशात् । अशाः । शिष्यात् । शिष्याताम् । शिष्यास्ताम् । सर्तिशास्तीत्यङ् । अशिषत् । अशासिष्यत् । इतिविदादय उदात्ताः परस्मैपदिनः । दीधीङ्, दीप्तिदेवनयोः । दीध्यादयः पञ्च[2] धातवश्छान्दसाः । दीधीते । दीध्याते ।

## यीवर्णयोर्दीधीवेव्योः ॥ ७ । ४ । ५३ ॥

यकारादाविवर्णादौ च परतो दीधीवेव्योर्लोपो भवति । इति लोपं बाधित्वा नित्यत्त्वाट्टेरेत्वम् । दीध्ये । दीधीवेधीटामितिगुणनिषेधः । दीध्या-ञ्चक्रे । दीधिता । दीधिष्यते । दीधीताम् । दीध्यै । आदीधीत । दीधीत दीधिषीष्ट । अदीधिष्ट । अदीधिष्यत् । वेवीङ्, वेतिना तुल्ये । वीगती-त्यनेन तुल्येर्थे वर्तत इत्यर्थः । पूर्ववदुदाहरणानि । सेटावात्मनेभाषौ ।

---

[१] अङ्योग्यस्यैव शासेर्ग्रहणाद् आशास्ते इत्यादौ नेति भाष्येस्पष्टम् ।

[२] माधवानुरोधेनपञ्चानां छान्दसत्वोक्तिः, परमत्रार्थे जक्षित्यादिसूत्रस्थ-भाष्यानुग्रहः । तेन सस्ति विहाय चत्वार एव छान्दसाः वशिन्तु-केचन कवयो लोकेऽपि प्रयुञ्जते, परन्तद् भाष्यविरुद्धम् ।

अथ त्रयःपरस्मैपदिनः । षस,सस्ति, स्वप्ने । सस्ति । सस्तः । ससन्ति । ससास । सेसतुः । ससिता । ससिष्यति । सस्तु । असत् । असस्ताम् । अससन् । असः । असत् । अससम् । सस्यात् । सस्याताम् । सस्युः । असासीत् । अससीत् । अससिष्यत् । इदित्वान्नुम् । सन्ति । सन्तः । संस्तन्ति । सन्तिस । सन्थः । सन्थ । सन्तिस्म । ससंस्त । ससंस्तिथ । संस्तिता । संस्तिष्यति । सन्तु । संस्तात् । संस्ताम् । संस्तन्तु । असन् । संस्त्यात् । सस्त्याताम् । असंस्तीत् । असंस्तिष्यत् । वश, कान्तौ । कान्तिरिच्छा । वष्टि । उष्टः । उशन्ति । वक्षि । उष्ठः । उवाश । ऊशतुः । वशिता । वष्टु । उष्टात् । उष्टाम् । उशन्तु । उड्ढि । वशानि । अवट् । उश्यात् । उश्याताम् । उश्यास्ताम् । अवाशीत् । अवशीत् । अवशिष्यत् । षसादयः परस्मै पदिनः समाप्ताः ।

[ चर्करीतञ्च ] [ ग० ] यङ्लुगन्तम् अदादौबोध्यम्-तेनशपो लुक् । ह्नुङ् अपनयने । ह्नुते । ह्नुवाते । ह्नुवते । जुह्नुवे । ह्नोता । ह्नोष्यते । ह्नुताम् । अह्नुत, ह्नुवीत । ह्नोषीष्ट । अह्नोष्यत ।

## इति लुग्विकरणा अदादयः समाप्ताः

# * अथ जुहोत्यादिगणः *

हु दानाऽदनयोः। आदाने चेत्येके। प्रीणनेऽपीति भाष्यम्। इह दानं चोदितं आधारे हविःप्रक्षेप इतिस्वाभावाल्लब्धम्[1]।

## जुहोत्यादिभ्यः श्लुः ॥ २। ४। ७५ ॥

जुहोत्यादिभ्य उत्तरस्य शपः श्लुर्भवति।

## श्लौ ॥६। १। १० ॥

श्लौ परतोऽनभ्यासस्यधातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगंद्वे भवतः। जुहोति। जुहुतः। अदभ्यस्तादित्यत्। हुश्नुवोरितियण्। जुह्वति।

## भीह्रीभृहुवां श्लुवच्च ॥ ३। १। ३९ ॥

ञिभी, ह्री, डुभृञ्, हु, एतेभ्यो लिटि परत आम्प्रत्ययो भवत्यन्यतरस्याम्, श्लाविव तस्मिन्कार्यं भवति। जुहवाञ्चकार। जुहाव। होता। होष्यति। जुहोतु। हुझल्भ्यो हेर्धिः। जुहुधि आटिपित्वाद्गुणः। जुहवानि। अजुहोत्। हुश्नुवोरितियणं परत्वाद्बाधित्वा जुसिचेतिगुणः। अजुहवुः। जुहुयात्। आशिषि। अकृदिति दीर्घः। हूयात्। अहौषीत्। अहोष्यत्। ञिभी, भये। बिभेति।

## भियोऽन्यतरस्याम् ॥ ६। ४। ११५ ॥

---

[१] आहवनीयाग्न्यादिरूपे ॥

भी इत्येतस्याङ्गस्यान्यतरस्यामिकारादेशो भवति हलादौ क्ङिति सार्वधातुके । परतः । बिभितः । बिभीतः । बिभ्यति । बिभयाञ्चकार । बिभाय । भेता । भेष्यति । बिभेतु । बिभियात् । भीयात् । अभैषीत् । अभेष्यत् । ह्री, लज्जायाम् । जिह्रेति जिह्रीतः । जिह्रियति । जिह्रयाञ्चकार । जिह्राय । ह्रेता । ह्रेष्यति । जुहोत्यादयोऽनुदात्ताः परस्मैपदिनः । पॄ[1], पालनपूरणयोः । उदात्तः परस्मैपदी ।

## अर्तिपिपर्त्योश्च ॥ ७ । ४ । ७७ ॥

अर्त्तिपिपर्त्ति इत्येतयोरभ्यासस्येकारादेशो भवति श्लौ ।

## उदोष्ठ्यपूर्वस्य ॥ ७ । १ । १०२ ॥

ओष्ठ्यः पूर्वो यस्माद् ॠकारादसावोष्ठ्यपूर्वस्तदन्तस्य धातोरङ्गस्य उकारादेशो भवति । गुणवृद्ध्योर्विषये तु विप्रतिषेधेन ते भवतः । पिपर्ति । उत्वम् । रपरत्वम् । हलिचेति दीर्घः । पिपूर्तः । पिपुरति । किति लिटि ऋच्छत्यॄतामिति गुणे प्राप्ते ।

## शॄदॄप्रां ह्रस्वो वा ॥ ७ । ४ । १२ ॥

एषामङ्गानां लिटि परतो वा ह्रस्वो भवति । पक्षे गुणः । पप्रतुः । पप्रः पपरतुः । पपरुः । परिता । परीता । परिष्यति । परीष्यति पिपर्तु । अपिपः । अपिपूर्ताम् । अपिपरुः । पिपूर्यात् । पूर्यात् । अपारीत् ।

[१] दीर्घोच्चारणमुत्त्वार्थम् ।
[२] गुणाभावे वार्णादाङ्गमिति यणं बाधित्वोत्त्वापत्त्या गुण एव न विकल्पितः ।

अपारिष्टाम्। ह्रस्वान्तोऽयं धातुरिति वर्धमानकाश्यपाभरणपुरुषकाराः। अत्रोदाहरणानि, पिपर्ति। पिपृतः। पिप्रति। पपार। पपर्थ। पर्ता। ऋद्धनोरितीट्। परिष्यति। पिपर्तु। पिप्रियात्। आशिषि। प्रियात्। अपार्षीत्। अपरिष्यत्। पाणिनीयमते तु तां पिपृतं रोदसी, पाहिमाग्ने पिपृहि, इत्यादयश्छान्दसाद्रष्टव्याः। डुभृञ्, धारणपोषणयोः।

## भृञामित् ॥ ७।४।७६ ॥

भृञादीनां त्रयाणामभ्यासस्येकारादेशो भवति श्लौ सति। बिभर्ति। बिभृतः। बिभ्रति। बिभृते। बिभृध्वे। बिभराञ्चकार। बभार। बभर्थ। बभृव। भर्ता। भरिष्यति। बिभर्तु। बिभृहि। बिभराणि। अबिभः। बिभृयात्। भ्रियात्। भृषीष्ट। अभार्षीत्। अभृत। अभरिष्यत्। अभरि[illegible] माङ्, माने शब्दे च।

## ई हल्यघोः ॥ ६।४।११३ ॥

श्नान्तानामङ्गानामभ्यस्तानां च घुवर्जितानामात ईकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः। मिमीते। श्नाभ्यस्तयोरित्याल्लोपः। मिमाते। मिमते। अमास्त। अमास्यत। ओहाङ्, गतौ। जिहीते। जिहाते। जिहते। जहे। हाता। हास्यते। ओहाक्, त्यागे। परस्मैपदी। जहाति।

## जहातेश्च ॥ ६।१।११६ ॥

जहातेश्च इकारादेशो भवति अन्यतरस्यां हलादौ क्ङिति सार्वधातुके परतः। पक्षे ईत्वम्। जहितः। जहीतः। जहति। जहौ। हाता। हास्यति जहातु।

[१] बहुवचनादाद्यर्थावगतिः, निजामित्यतस्त्रयाणामित्यनुवर्तते।

## आ च हौ ॥ ६ । ४ । ११७ ॥

जहाते राकारश्चान्तादेशो भवति इकारश्चान्यतरस्यां हौ परतः । जहाहि । जहिहि । जहीहि । अजहात् ।

## लोपो यि ॥ ६ । ४ । ११८ ॥

लोपो भवति जहातेर्यकारादौ क्ङिति सार्वधातुके परतः । जह्यात् । हेयात् । अहासीत् । अहास्यत् । डुदाञ्, दाने । प्रणिददाति । दत्तः । ददति । दत्ते । ददौ । दातासि । दातासे । दास्यति । दास्यते ।

## घ्वोर्लोपोलेटि वा ॥ ७ । ३ । ७० ॥

घुसंज्ञकस्य लोपो वा लेटि । ददति ददाति । ददत् । ददात् । ददातु । घ्वसोरित्येत्वाभ्यासलोपौ । देहि । अददात् । अदत्ताम् । अददुः । दद्यात् । एत्वम् । देयात् । अदात् । अदाताम् । अदुः । अदित । डुधाञ्, धारणपोषणयोः । दानेऽप्येके । प्रणिदधाति ।

## दधस्तथोश्च ॥ ८ । २ । ३८ ॥

द्विरुक्तस्य झषन्तस्य दधातेर्बशो भष् भवति तथोः परतश्चात् स्ध्वोश्च । आलोपो न स्थानिवत्, पूर्वत्रासिद्धीये न स्थानिवदिति निषेधात् । धत्तः । दधति । धत्थ । दध्वः । धत्ते । धत्से । धद्ध्वे । धेहि । अधित । अधास्यत् । अधास्यत । अनुदात्तावुभयतोभाषौ । अथ त्रयः स्वरितेतः । णिजिर्, शौचपोषणयोः ।

## निजां त्रयाणां गुणः श्लौ ॥ ७ । ४ । ७५ ॥

निजादीनां त्रयाणामभ्यासस्य गुणो भवति श्लौ सति । नेनेक्ति । नेनिक्तः । नेनिजति । नेनिक्ते । निनेज । निनिजे । नेक्ता । नेक्तासि । नेक्तासे । नेक्ष्यति । नेक्ष्यते । नेनेक्तु । नेनिग्धि ।

## नाऽभ्यस्तस्याचि पिति सार्वधातुके ॥ ७ । ३ । ८७ ॥

अभ्यस्तसंज्ञकस्याङ्गस्य लघूपधस्याजादौ पिति सार्वधातुके गुणो न भवति । नेनिजानि । नेनिक्ताम् । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । अनेनिक्त । नेनिज्यात् । नेनिजीत । निज्यात् । निक्षीष्ट । अनिजत् । अनैक्षीत् अनिक्त । अनेक्ष्यत् । अनेक्ष्यत । विजिर्, पृथग्भावे । वेवेक्ति । वेविक्ते । विवेजिथ । विविजे । वेक्तासि । वेक्तासे । वेवेक्तु । विजइडितिङित्वन्न । ओविजीइत्यस्यैव तत्र ग्रहणात् । ओविजी रुधादौ, तुदादौ च । अन्यत्सर्वं निजिवत् । विष्लृ, व्याप्तौ । वेवेष्टि । वेविष्टे । वेक्ष्यति । षढोः कस्सि । वेविड्ढ । झलां जशत्वेन डकारः । अवेट् । लृदित्वान्नित्यमङ् । अविषत् । तङ तु शलइगुपधादनिटः क्सः । अजादौ क्सस्याचि, इत्यल्लोपः । अविक्षत । अविक्षाताम् । अविक्षन्त । अवेक्ष्यत् । अवेक्ष्यत । निजादयः स्वरितेतोऽनुदात्ताः । समाप्तोः । अथाऽऽ-गणान्ताः परस्मैपदिनश्छान्दसाश्चैकादश । घृ, क्षरणदीप्त्योः ।

## बहुलं छन्दसि ॥ ७ । ४ । ७८ ॥

छन्दसि विषयेऽभ्यासस्य श्लौ बहुलमिकारादेशो भवति । जिघर्त्ति । जिघृतः । जघृतः । जिघ्रति । जघार । घर्ता । घरिष्यति । जिघर्तु । जघर्तु । अजिघः । अजघः । जिघृयात् । घ्रियात् । अघार्षीत् । अघरिष्यत् । हृ, प्रसह्यकरणे । ( हृग्रहोर्भश्छन्दसि हस्य भत्वम् ) इतिहस्य भश्छन्दसि जिभर्त्ति । जभर्त्ति । जभार । जहार । भर्ता । भरिष्यति । जिभर्त्तु । जभर्त्तु । जभ्रतु । जभृहि । अजभः । जभृयात् । भ्रियात् । अभार्षीत् । अभरिष्यत् । ऋ, सृ, गतौ । बहुलंछन्दसीत्येवसिद्धे अर्तिपिपर्त्योश्चे-तीत्वविधानादयं भाषायामपि । अभ्यासस्यासवर्णे, इतीयङि पिति गुणः ।

[ १ ] अभ्यस्तस्यकिम् द्वेषाणि अचिकिम् । नेनेक्ति । पितीत्युत्तरार्थम् ।

अन्यत्राजादौ यणादेशः । इयर्त्ति । इयृतः । इयृति । आर । आरतुः । आरिथ । अर्त्ता । अर्तासि । अरिष्यति । इयर्त्तु । इयृतात् । इयृताम् । इयृतु । ऐयः । इयृयात् । अर्यात् । आरिष्यत् । ससर्त्ति । सिसर्त्ति । इत्यादि । घ्रादयश्चत्वारोऽनुदात्ताः । भस, भर्त्सनदीप्त्योः । बिभस्ति । बभस्ति ।

## घसिभसोर्हलि च ॥ ६ । ४ । १०० ॥

घसि भस इत्येतयोश्छन्दसि उपधाया लोपो भवति हलादावजादौ च क्ङिति प्रत्ययेपरतः । झलो झलीति सलोपः । बब्धः । बप्सति बभास । बिभस्तु । बब्धाम् । बभसानि । अबिभः । अबिब्धाम् । अबिभसुः । बप्स्यात् । बप्स्याम् । भस्यात् । भस्यास्ताम् । अभासीत् । अभसीत् । अभसियष्त् । कि, ज्ञाने । चिकेति । चिकेतु । चिकिहि । अचिकेत् । चिकियात् । कीयात् । अकैषीत् । तुर, त्वरणे । तुतोर्ति । तुतूर्तः । तुतुरति । तुतोर्तु । तुतुराणि । अतुतोः । अतुतुरुः । तुतूर्यात् । तूर्यात् । अतोरीत् । धिष, शब्दे । दिधेष्टि । दिधिष्टः । दिधिपतीत्यादि । धन, धान्ये । दिधन्ति । दधन्ति । दधान । धनिता । धनिष्यति । अधनिष्यत् जन, जनने । जजन्ति ।

## जनसनखनां सञ्झलोः ॥ ६ । ४ । ४२ ॥

जन सन खन इत्येतेषामङ्गानां सनि झलादौ क्ङिति झलादौ प्रत्यये परत आकार आदेशो भवति । जजातः । जज्ञति । जजंसि । जजाथः । जजन्मि । जजान । जज्ञतुः । जजन्तु ।

---

[१] यणोऽचः परस्मिन्निमित्तस्थानिवत्त्वाल्लोपो व्योरिति यलोपो न । यलोपे स्थानिवत्त्वनिषेधस्तु लोपरूपाजादेशस्यैवेति ।

[२] आटि द्वित्वेऽभ्यासस्येत्त्वे इयङि, उत्तरखण्डे गुणे, रपरत्वे, वृद्धौ हल्ङ्यादिलोपे, विसर्गे, ।

## वा छन्दसि ॥ ३ । ४ । ८८ ॥

आदेशश्छन्दसि विषये हिशब्दो वाऽपिद्भवति । जजन्हि । जजनानि । अजजन् । जजायात् । जजन्यात् । अजानीत् । अजनीत् । गा, स्तुतौ । जिगाति । जिगीतः । जिगति । जगौ । गाता । गास्यति । जिगातु । अजिगात् । जिगीयात् । गायात् । अगासीत् । अगास्यत् ।

इति श्लुविकरणो जुहोत्यादिगणः समाप्तः ।

# ❀ अथ दिवादिगणः ❀

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । भूषन्ताःपरस्मैपादिनः।

## दिवादिभ्यः श्यन् ॥ ३ । १ । ६९ ॥

दिव इत्येवमादिभ्यो धातुभ्यः श्यन् प्रत्ययो भवति । शपोऽपवादः । हलि चेति दीर्घः । दीव्यति । दीव्यतः । दीव्यन्ति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । षिवु, तन्तुसन्ताने । परिषीव्यति । परिषिषेव । न्यषेवीत् । न्यसेवीत् । स्रिवु, गतिशोषणयोः । स्रीव्यति । ष्ठिवु, निरसने । ष्ठीव्यति । केचिदिहेमं नपठन्ति। "सुब्धातु ष्ठिवुष्वष्कतीनामि" तिषस्य सकारनिषेधः । तिष्ठेव । ष्णुसु, अदने । आदानइत्येके । अदर्शनइत्यपरे । स्नुस्यति । सुष्णोस । ष्णसु, निरसने । स्नस्यति । सस्नास । सस्नसतुः । क्नसु, ह्वरणदीप्त्योः । ह्वरणं कौटिल्यम् । क्नस्यति । चक्नास । व्युष, दाहे । व्युष्यतीत्यादि । प्लुष च, प्लुष्यति । नृती, गात्रविक्षेपे । नृत्यति । ननर्त्त । ननर्तिथ ।

## सेऽसिचि कृतचृतच्छृदतृदनृतः ॥ ७ । २ । ५७ ॥

सकारादावसिच्यार्धधातुके कृत चृत छृद तृद नृत इत्येतेभ्यो धातुभ्यो वा इडागमो भवति । नर्तिष्यति । नर्त्स्यति । नृत्यतु । अनृत्यत् । नृत्येत् । नृत्यात् । अनर्त्तीत् । अनर्त्तिष्यत् । अनर्त्स्यत् । त्रसी, उद्वेगे । वाभ्राश' इतिश्यन्विषये पक्षे शप् । त्रस्यति । त्रसति । तत्रास । वाजृभ्रमुत्रसाम् इति एत्वाभ्यासलोपविकल्पः । त्रेसतुः । तत्रसतुः । त्रेसुः । 'त्रेसिथ । तत्रसिथ ।

त्रसिता । त्रसिष्यति । त्रस्यतु । त्रसतु । अत्रस्यत् । अत्रसत् । त्रस्येत् । त्रसेत् । त्रस्यात् । अत्रासीत् । अत्रसीत् । अत्रसिष्यत् । कुथ, पूतीभावे । पूतीभावो दौर्गन्ध्यम् । कुथ्यतीत्यादि । पुथ, हिंसायाम् । गुध, परिवेष्टने । क्षिप, प्रेरणे । क्षिप्यति । चिक्षेप । क्षेप्ता । क्षेप्स्यति । क्षिप्यतु । अक्षिप्यत् । क्षिप्येत् । क्षिप्यात् । अक्षैप्सीत् । अक्षेप्स्यत् । पुष्प, विकसने । पुष्प्यति । पुपुष्प । तिम, ष्टिम, ष्टीम, आर्द्रीभावे । तिम्यति । स्तिम्यति । स्तीम्यति । व्रीड, चोदने, लज्जायाञ्च । व्रीड्यति । विव्रीड । इष, गतौ । इष्यति । [illegible] । अभ्यासस्यासवर्णे, इतीयङ्–इयेष । ईषतुः । ईषुः । एषिता[1] । ऐषीत् । ऐषिष्यत् । षह[2], षुह, चक्यर्थे । चक्यर्थ-स्तृप्तिः । सह्यति । सुह्यति । ससाह । सेहतुः । सेहुः । सेहिथ । सुसोह । तीषसहेति इड्विकल्पः । सहिता । सहिवहोरिति ओकारः । सोढा । सहिष्यति । हम्यन्तेति न वृद्धिः । असहीत् । असहिष्यत् । जॄष्, झॄष्, वयोहानौ ॠत इद्धातो' रितीत्वे रपरत्वे । हलिचेति दीर्घः । जीर्यति । जीर्यतः । जजार । वाजॄभ्रमुत्रसामित्वेत्वाभ्यासलोपौवा । जेरतुः । जजरतुः । वॄतोवेत्यलिटोवा दीर्घः । जरिता । जरीता । जरिष्यति । जरीष्यति । जीर्यतु । अजीर्यत् । जीर्येत् । जीर्यात् । जॄस्तम्भिवत्यङ्वा । ॠदृशोऽङीतिगुणः । अजरत् । पक्षे । अजारीत् । अजरिष्यत् । अजरीष्यत् । झीर्यति । जझरतुः । अझारीत् । दिवादय उदात्ताः क्षिपिवर्जम् । षूङ्, प्राणिप्रसवे । सूयते । सुषुवे । स्वरतिसूतीति वलादाविड्विकल्पः । लिट्यमुं विकल्पं बाधित्वापुर-स्तात्प्रतिषेधकाण्डारम्भसामर्थ्याच्छ्रयुकः क्तितीति प्रतिषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सुषुविषे । सुषुविवहे । सुषुविमहे । सोता । सविता । सोष्यते । सविष्यते । सूयताम् । असूयत । सूयेत । सोषीष्ट । सविषीष्ट ।

---

[१] इषेस्तकारेश्यन्प्रत्ययात्प्रतिषेध इतीड्विकल्पो न ।

[२] अत्र सहिपाठं बहवो न मन्यन्ते ।

असविष्ट। असोष्ट। असविष्यत। असोष्यत। दूङ्, परितापे। दूयते। दुदुवे। दविता। द्वाविमावात्मनेभाषावुदात्तौ। दीङ्, क्षये। दीयते।

## दीङो युडचि क्ङिति ॥ ६। ४। ६३ ॥

दीङो युडागमो भवति अजादौ क्ङिति प्रत्यये परतः। स च एरनेकाचेति यणि कर्त्तव्येऽसिद्धवदत्रेति नासिद्धः ( वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ) दिदीये। दिदीयिषे। दिदीयिढ्वे। दिदीयिध्वे। दिदीयिवहे।

## मीनातिमिनोतिदीङां ल्यपि च ॥ ६। १। ५० ॥

मीञ्, डुमिञ् दीङ् इत्येतेषां धातूनां ल्यपि विषये चकारादेचश्च विषये उपदेश एव प्राक्प्रत्ययोत्पत्तेरलोन्त्यस्य स्थाने आकारादेशो भवति। दाता। दास्यते। दीयताम्। अदीयत। दीयेत। दासीष्ट। अदास्त। अदास्थाः। अदासि। अत्रात्वेकृते दारूपत्वेऽपिदीङः प्रतिषेधः स्थाध्वोरित्वे इति इत्वकित्वयोर्घुसंज्ञा निषिध्यते। अतएव विषयविशेषेघुत्व-निषेधादन्यत्र कृतात्वस्य घुसंज्ञायां प्रणिदातेत्यादिसिद्धमित्येके। अदास्यत। डीङ्, विहायसागतौ। डीयते। डिड्ये। अडयिष्ट। अडयिष्यत। धीङ्, आधारे। धीयते। दिध्ये। धेता। मीङ्, हिंसायाम् अत्रप्राण-विश्लेषो हिंसाफलं गृह्यते। मीयते। रीङ्, श्रवणे। रीयते। रिर्ये। रेतासे। रेष्यते। रीयताम्। अरीयत। रीयेत। रेषीष्ट। अरेष्ट। अरेष्यत। लीङ्, श्लेषणे। लीयते।

## विभाषा लीयतेः ॥ ६। १। ५१ ॥

ली[१]यतेर्धातोर्ल्यपिच एचश्च विषये उपदेश एवाऽलोन्त्यस्य स्थाने विभाषा आकारादेशो भवति। लेता। लाता। लास्यते। लेष्यते।

---

[१] लीलीङो र्द्वयोर्ग्रहणम्। लीङ् श्लेषण इति दिवादिः, लीश्लेषण इति क्र्यादिस्तयोरुभयोरपि यका निर्देशःस्मर्यते।

एज्विषये किम् । लीयते । लिल्ये । लीयताम् । अलीयत । लीयेत । लासीष्ट । लेषीष्ट । अलास्त । अलेष्ट । अलास्यत । अलेष्यत । व्रीङ्, वृणोत्यर्थे । व्रीयते । विव्रिये । संयोगपूर्वत्वाद्यण् न । व्रेतेत्यादि रीवत् । स्वादय ओदितः । तत्फलम्, ओदितश्च इतिनिष्ठानत्वम् । पीङ्, पाने । पीयते । पिप्ये । माङ्, माने । मायते । ममे । ईङ् गतौ । ईयते । अयाञ्चक्रे । एता । एष्यते । ईयताम् । ऐयत । ईयेत । एषीष्ट । ऐष्ट । ऐष्यत । प्रीङ्, प्रीतौ । प्रीयते । पिप्रिये । दीङादय आत्मनेपदिनो डीङ्-वर्जमनुदात्ताः । अथपरस्मैपदिनश्चत्वारः । शो, तनूकरणे ।

## ओतः श्यनि ॥ ७ । ३ । ७१ ॥

ओकारान्तस्याङ्गस्य श्यनि परतो लोपो भवति । श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शाता । शास्यति । श्यतु । श्य । अश्यत् । श्येत् । शायात् । विभाषाघ्राधेडिति सिचोलुग्वा । लुगभावे यमरमेतीट्सकौ । आशात् । अशाताम् । अशुः । अशासीत् । अशासिष्टाम् । अशास्यत् । छो, छेदने । छ्यति । चच्छौ । चच्छतुः । इत्यादि सर्वं श्यतिवत् । षोऽन्तकर्मणि । नाशनमन्तकर्म । स्यति । ससौ । अभिष्यति । अभ्य-ष्यत् । दो, अवखण्डने । द्यति । ददौ । प्रणिदाता । देयात् । अदात् । श्यतिप्रभृतयोऽनुदात्ताः । अथात्मनेपदिनः पञ्चदश । जनी, प्रादुर्भावे । प्रादुर्भाव उत्पत्तिरभिव्यक्तिर्वा ।

## ज्ञाजनोर्जा ॥ ७ । ३ । ७९ ॥

ज्ञा जन इत्येतयो र्जादेशो भवति शिति परतः । जायते । जज्ञे । जज्ञाते । जज्ञिरे । जनिता । जनिष्यते । जायताम् । अजायत । जायेत । जनिषीष्ट । लुङि दीपजनेति कर्तरि तशब्दे च्लेर्वा चिण् । तदुत्तरस्य तशब्दस्य लुक् ।

## जनिवध्योश्च ॥ ७ । ३ । ३५ ॥

जनि वधि इत्येतयो श्चिणि कृति च ञ्णिति यदुक्तं तन्न भवति । क्रिञ्चोक्तम्, अत उपधाया इति वृद्धिः। अजनि । अजनिष्ट। अजनिषाताम् । अजनिषत । अजनिष्यत । दीपी, दीप्तौ । दीप्यते । दिदीपे । दीपिता । दीपिष्यते । दीप्यताम् । अदीप्यत । दीप्येत । दीपिषीष्ट । अदीपि । अदीपिष्ट । अदीपिष्यत । पूरी, आप्यायने । पूर्यते । पुपूरे । अपूरि । अपूरिष्ट । तूरी, गतित्वरणहिंसनयोः। तूर्यते । तुतूरे । अतूरिष्ट । धूरी, गूरी, हिंसागत्योः । धूर्यते । दुधूरे । गूर्यते । जुगूरे । घूरी, जूरी, हिंसावयोहान्योः । शूरी, हिंसास्तम्भनयोः । चूरी, दाहे । तप, ऐश्वर्ये । अनिट् । तप्यते । तेपे । तप्ता । तप्स्यते । तप्यताम् । अतप्यत । तप्येत । तप्सीष्ट । अतप्त । अतप्स्यत । वावृतु, वरणे । वावृत्यते । वावर्त्ताञ्चक्रे । वेदे तु ववावृत्ते । वावर्तितासे । वावर्त्तिष्यते । अवावर्तिष्ट । क्लिश, उपतापे । क्लिश्यते । चिक्लिशे। क्लेशितेत्यादि । काशृ, दीप्तौ । काश्यते । वाशृ, शब्दे । वाश्यते । ववाशे । जन्यादयोऽनुदात्तेतस्तपिवर्जमुदात्ताः। अथपञ्चस्वरितेतः । मृष, तितिक्षायाम् । तितिक्षा, क्षमा । मृष्यति । मृष्यते । ममर्ष । ममृषे । मर्षिता । मर्षिष्यति । मृष्यतु । मृष्यताम् । अमृष्यत् । अमृष्यत । मृष्येत् । मृष्येत । मृष्यात् । मर्षिषीष्ट । अमर्षीत् । अमर्षिष्ट । अमर्षिष्यत् । अमर्षिष्यत । ईशुचिर्[२], पूतीभावे । पूतीभावः क्लेदः । शुच्यति । अशुचत् । अशोचीत् । अशोचिष्ट । अशो-

[१] केचित्तु वेत्यस्य पूर्वत्रान्वयः, तपिधातुरैश्वर्ये वा तङ्श्यनौ लभते इति तदर्थः । ततो वावृत्यमानेति भट्टिप्रयोगे वाशब्दः इवार्थकः । वृत्ते तु वृत्तवावृत्तावितिकोशोक्तवावृत्तशब्दः पृषोदरादित्वात्साधुः, अत्रार्थे एव भाष्यानुग्रहइत्याहुः ।

[२] श्वीदितो निष्ठायमितीणनिषेध ईदित्फलम् ।

चिष्यत् । अशोचिष्यत । णह, बन्धने नह्यति । नह्यते । ननाह । नेहतुः, नेहुः । नेहिथ । नहोध इति हकारस्य धत्वम् । ननद्ध । नद्धा । नत्स्यति । नत्स्यते । नह्यताम् । अनात्सीत् । रञ्ज, रागे । रज्यति । रज्यते । शप, आक्रोशे । शप्यति । शप्यते । अशाप्सीत् । अशप्त । अशप्स्यत् । अशप्स्यत । णहादयस्त्रयोऽनुदात्ताः स्वरितेत उभयपदिनः । अथैकादशानुदात्तेतः । पद, गतौ । पद्यते । पेदे । पत्ता । पत्स्यते । पद्यताम् । अपद्यत । पद्येत । पत्सीष्ट ।

## चिण् ते पदः ॥ ३ । १ । ६० ॥

अस्माद्धातोः परस्य च्लेश्चिणादेशो भवति तशब्दे परतः । अपादि । अपत्सातााम् । अपत्सत । अपत्स्यत । खिद, दैन्ये । खिद्यते । चिखिदे । खेत्ता । खित्सीष्ट । अखित्त । विद, सत्तायाम् । विद्यत इत्यादि खिदिवत् वेत्तीति ज्ञाने गतम् । बुध, अवगमने । बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । बुध्यताम् । अबुध्यत । बुध्येत । भुत्सीष्ट । अबोधि । अबुद्ध । अभोत्स्यत । युध, सम्प्रहारे । युध्यते । युयुधे । योद्धा । योत्स्यते । युत्सीष्ट । अयुद्ध । अनोरुध, कामे । रुधेरनूपसृष्टस्यकामेऽर्थे दिवादित्वमात्मनेपदत्वञ्च । अनुरुद्ध्यत-इत्यादि पूर्ववत् । अण, प्राणने । अन, इत्यन्ये । अण्यते । आणे । अणिता । अणिष्यते । अण्यताम् । आणिष्ट । आणिष्यत । मन, ज्ञाने । मन्यते । मेने । मन्ता । मंसीष्ट । अमंस्त । युज, समाधौ । युज्यते । युयुजे । योक्ता । सृज, विसर्गे । सृज्यते । ससृजे । स्रष्टा । स्रक्ष्यते । सृज्यताम् । असृज्यत । सृज्येत । सृक्षीष्ट । असृष्ट । अस्रक्ष्यत । लिश, अल्पीभावे । लिश्यते । लिलिशे । लेष्टा । लेक्ष्यते । लिक्षीष्ट । अलिक्षत । अलेक्ष्यत । पदादयोऽनुदात्तेत आत्मनेभाषा अण्यति वर्जमनुदात्ताः । अथागणान्ताःपरस्मैपदिनः-सप्तषष्टिः । राधो ऽकर्मकाद्वृद्धावेव[1] । एवकारो भिन्नक्रमः । अस्मादकर्मकादेव

[१] वृद्धावित्युपलक्षणम् । अतएव राध्यत्योदनः स्वयमेवेति कर्मवत्सूत्रस्थभाष्यप्रयोगोपपत्तिरिति । राध्यति सिध्यतीत्यर्थः ।

श्यन् । उदाहरणमाह वृद्धाविति । राध्यति । रराध । रराधतुः । हिंसार्थस्य-राधस्सकर्मत्त्वाद्राधो हिंसायामिति न प्रवर्त्तते । रराधिथ । राद्धा । रात्स्यति । राध्यतु । अराध्यत् । राध्येत् । राध्यात् । अरात्सीत् । अराद्धाम् । अरात्सुः । अरात्स्यत् । अयं स्वादिश्चुरादिश्च । व्यध, ताड़ने । ग्रहिज्येति सम्प्रसारणम् । विध्यति । विध्यतः । विध्यन्ति । विव्याध । विविधतुः । विव्यधिथ । विव्यद्ध । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् । अव्यत्स्यत् । पुष, पुष्टौ । पुष्यति । पुपोष । पोष्टा । पोक्ष्यति । पुष्यतु । अपुष्यत् । पुष्येत् । पुषादीत्यङ् । अपुषत् । अपोक्ष्यत् । शुष, शोषणे । अशुषत् । तुष, प्रीतौ । अतुषत् । दुष, वैकृत्ये । दुष्यति । अदुषत् । श्लिष, आलिङ्गने । श्लिष्यति । शिश्लेष । श्लेष्टा । श्लेक्ष्यति । श्लिष्यतु । अश्लिष्यत् । श्लिष्येत् । श्लिष्यात् ।

## श्लिष आलिङ्गने ॥ ३ । १ । ४६ ॥

विभक्तोऽयं[1] भाष्ये । श्लिषेर्धातोरालिङ्गनक्रियावचनात्परस्य च्लेः क्स आदेशो भवति । अश्लिक्षत् । आलिङ्गनं परिष्वङ्गः । अन्यत्रपुषादित्वादङ् । अश्लिषत् । शक, विभाषितो मर्षणे । अयं मर्षणे दिवादिः । विभाषित इत्युभयपदी । शक्यति । शक्यते । शशाक । शेकिथ । शशक्थ । शेके । शक्ता । शक्ष्यति । शक्ष्यते । अशकत् । अशक्ष्यत । अयं सेडित्येके । ञिष्विदा, गात्रप्रक्षरणे । गात्रप्रक्षरणं घर्मस्रुतिः । ष्विदेति

[१] "श्लिष" अस्मात्परस्यानिट श्च्लेः क्सः पुषाद्यङोपवादो न चिणः, पुरस्तादपवादन्यायात् । ततः, आलिङ्गने । श्लिषश्च्लेरालिङ्गने एव क्सो नान्यत्र । योगविभागसामर्थ्याच्छलइगुपधेत्यस्याप्ययं नियमः । अश्लिक्षत् कन्यां देवदत्तः । आलिङ्गनएवेति किम् समश्लिषज्जतुकाष्ठम् । प्रत्यासत्ताविह श्लिषिः । कर्मणिअनालिङ्गने सिजेव न तु क्सः । एकवचने चिण्-अश्लेषि । अश्लिक्षाताम् । इति दीक्षितादयः ।

केचित् । स्विद्यति सिस्वेद । सिस्वेदिथ । स्वेत्ता । स्वेत्स्यति । स्विद्यतु । अस्विद्यत् । स्विद्येत् । स्विद्यात् । अस्विदत् । अस्वेत्स्यत् । क्रुध, क्रोधे । क्रुध्यति । चुक्रोध । क्रोद्धा । अक्रुधत् । क्षुध, बुभुक्षायाम् । क्षुध्यति । चुक्षोध । अक्षुधत् । शुध, शौचे । शुध्यति । शुशोध । शोद्धा । अशुधत् । षिधु, संराद्धौ । सिध्यति । सिसेध । असिधत् । राधादयोऽनुदात्ताः उदात्तेतः परस्मैपदिनः । रध, हिंसासंराद्ध्योः । संराद्धिः,पाकः । रध्यति रधिजभोरचि, इति नुम् । ररन्ध । ररन्धतुः ।

## रधादिभ्यश्च ॥ ७ । २ । ४५ ॥

रध हिंसासंसिद्ध्योरित्येवमादिभ्योऽष्टाभ्य उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति । ररन्धिथ । ररद्ध । ररन्धिव । रेध्व ।

## नेट्यलिटि रधेः ॥ ७ । १ । ६२ ॥

इडादावलिटि प्रत्यये परे रधेर्नुमागमो न भवति । रधिता । रद्धा । रधिष्यति । रत्स्यति । रध्यतु । अरध्यत् । रध्येत् । रध्यात् । अङि । रधिजभोरचि, इति नुम् । अनिदितामितिन लोपः । अरधत् । अरधताम् । अरधिष्यत् । अरत्स्यत् । णश, अदर्शने । नश्यति । ननाश । नेशतुः । नेशुः । इड्विकल्पः । नेशिथ । अनिट्पक्षे । मस्जिनशोर्झलि, इति थलि नुमि । ननंष्ठ । नेशथुः । नेश । ननाश । ननश । नेशिव । नेश्व । नेशिम । नेश्म । एवमन्यस्मिन्नपि झलादौ । नशिता । नंष्टा । नशिष्यति । नङ्क्ष्यति । अनशत् । अनशिष्यत् । अनङ्क्ष्यत् । प्रणश्यति ।

## नशेः षान्तस्य ॥ ८ । ४ । ३६ ॥

नशेः षकारान्तस्य णकारादेशो न भवति । प्रनंष्टा । प्रनङ्क्ष्यति । तृप, प्रीणने । इहप्रीणनं-तृप्तिस्तर्पणञ्च[२] । तृप्यति । ततर्प । ततृपतुः । थलि, रधादिभ्यश्चेति इट् । ततर्पिथ । पक्षे, अनुदात्तस्य चर्दुपधस्य, इति थल्यनिट्पक्षेऽमागमविकल्पः । कृते च तस्मिन् यणादेशः तत्रप्थ । ततर्प्थ । एवं सर्वत्र झलादावार्द्धधातुके । तर्पिता । त्रप्ता । तर्प्ता । तर्पिष्यति । त्रप्स्यति । तर्प्स्यति । तृप्यतु । अतृप्यत् । तृप्येत् । तृप्यात् । लुङि । ( स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः इतिसिच्पक्षे, अनिट्पक्षे चामागमे, वदव्रजेति वृद्धौ—अत्राप्सीत् । अमभावे—अतार्प्सीत् । इटि, नेटीति वृद्धि निषेधे—अतर्पीत् । अङि—अतृपत् । अतर्पिष्यत् । अत्रप्स्यत् । अतर्प्स्यत् । दृप, हर्षमोहनयोः । मोहनं गर्वः । दृप्यतीत्यादि पूर्ववत् । द्रुह, जिघांसायाम् , द्रुह्यति । दुद्रोह । दुद्रोहिथ । अनिट्पक्षे वा द्रुहमुहेति वा घः । पक्षे ढः । दुद्रोग्ध । दुद्रोढ । द्रोहिता । द्रोग्धा । द्रोढा । द्रोहिष्यति । ध्रोक्ष्यति । ढत्वपक्षेऽपि इदमेव रूपम् । द्रुह्यतु । अद्रुह्यत् । द्रुह्येत् । द्रुह्यात् । अद्रुहत् । अद्रोहिष्यत् । अध्रोक्ष्यत् । मुह, वैचित्ये । मुह्यति । मुमोह । मुमोहिथ । मुमोग्ध । मुमोढ । मोहिता । मोग्धा । मोढा । मोहिष्यति । मोक्ष्यति । अमुहत् । ष्णुह, उद्गिरणे । स्नुह्यति । सुष्णोहिथ । सुष्णोग्ध । सुष्णोढ । सुष्णुहिव । सुष्णुह्व । स्नोहिता । स्नोग्धा । स्नोढा । स्नोहिष्यति । स्नोक्ष्यति । अस्नुहत् । ष्णिह, प्रीतौ । स्निह्यति । सिष्णेह । सिष्णेहिथ । अस्निहत् । वृत् । रधादयः समाप्ताः । अत्रवृत्करणं रधादिपरिसमाप्त्यर्थम् । पुषादयस्त्वाऽऽगणान्तात् । शमु, उपशमे ।

## शमामष्टानां दीर्घः श्यनि ॥ ७ । ३ । ७४ ॥

[१] अन्तग्रहणं भूतपूर्वषान्तत्वाश्रयणार्थम् ।
[२] नाग्निस्तृप्यति काष्ठानाम् । पितॄनतार्प्सीदित्युभयथा दर्शनात् ।

शमामष्टानां दीर्घो भवति श्यनि परतः। प्रणिशाम्यति । शशाम। शेमतुः। शेमुः। शेमिथ। शमिता। अशमत्। तमु, काङ्क्षायाम्। ताम्यति तताम। तेमतुः। अतमत्। दमु, उपशमे। उपशम इति एयन्तस्य तेन सकर्मकः। दाम्यति। अदमत्। श्रमु, तपसि खेदे च। श्राम्यति। अश्रमत्। भ्रमु, अनवस्थाने। भ्राम्यति। वा भ्राशेतिश्यन्वा। भ्रमति। अभ्रमत्। क्षमू, सहने। क्षाम्यति। चक्षाम। चक्षमिथ। चक्षन्थ। चक्षमिव। चक्षण्व। क्षमिता। क्षन्ता। क्षमिष्यति। क्षंस्यति। क्षाम्यतु। अक्षाम्यत्। अक्षमत्। क्लमु, ग्लानौ। क्लाम्यति। क्लामति। वाभ्राशेत्यादिना श्यन्विकल्पः। शपीव श्यन्यपि 'ष्ठिवुक्लमु, इत्येव दीर्घे सिद्धेऽस्य शमादिपाठो घिनुणर्थः। अक्लमत्। मदी, हर्षे। माद्यति। ममाद। मेदतुः। मेदिथ। मेदिता। मेदिष्यति। अमदत्। अमदिष्यत्। इत्यष्टौ शमादयः। असु, क्षेपणे। अस्यति। आस। असिता। असिष्यति। अस्यतु। अस्यतिवक्ती तिलुङ्क्ष्यङि कृते।

## अस्यतेस्थुक् ॥ ७।४।१७ ॥

अस्यतेरङ्गस्यथुगागमोभवत्यङि परतः। आस्थत्। आस्थताम्। पुषादित्वादङि सिद्धेऽस्यतिग्रहणमात्मनेपदार्थम्। तच्च उपसर्गादस्यत्यूह्योर्वेति वक्ष्यते। पर्यास्थत। यसु, प्रयत्ने।

## यसोऽनुपसर्गात् ॥ ३।१।७१ ॥

यसु प्रयत्ने दैवादिकः, तस्मान्नित्यं श्यनि प्राप्तेऽनुपसर्गाद्विकल्प उच्यते। यस्यति। यसति।

## संयसश्च ॥ ३।१।७२ ॥

संपूर्वाच्च यसेर्वा श्यन् प्रत्ययो भवति। संयस्यति। संयसति। अनुपसर्गात्किम्। प्रयस्यति। ययास। येसतुः। येसुः। यसिता।

यसिष्यति। यस्यतु । अयस्यत् । यस्येत्। यस्यात्। अयसत् । अय सिष्यत्। जसु, मोक्षणे। जस्यति। अजसत्। तसु, उपक्षये । दसु, च। तस्यति । अतसत्। दस्यति। अदसत्। वसु, स्तम्भे। वस्यति। ववास। ववसतुः ।नशसददेतिनिषेधः। अवसत्। बकारादिरयमित्येके। तेषां मते । बेसतुः। बेसुः। व्युष, विभागे। व्युष्यति। अव्युषत्। ओष्ठ्यादिर्दन्त्यान्तोऽयमित्येके । अपरे लयकारं वुसेति। प्लुष, दाहे। प्लुष्यति। अप्लुषत्। पूर्वत्रपाठश्चिन्त्यः। बिस, प्रेरणे। बिस्यति। बिवेस। अबिसत्। कुस, संश्लेषणे। कुस्यति। अकुसत्। बुस, उत्सर्गे। बुस्यति। अबुसत्, मुस, खण्डने। मुस्यति। मुमोस। अमुसत्। मसी, परिणामे। परिणामो विकारः। मस्यति। ममास। अमसत्। आद्यन्तव्यत्यासेन, समीत्येके। सम्यति। असमत्। लुठ, विलोडने। लुठ्यति। अलुठत्। उच, समवाये। उच्यति। उवोच। ऊचतुः। ओचिता। ओचिष्यति। उच्यतु। औच्यत्। उच्येत्। औचत्। मा भवानुचत्। भृशु, भ्रंशु, अधःपतने। भृश्यति। बभर्श। अभृशत्। अनिदितामिति नलोपः। भ्रश्यति। अभ्रशत्। वृश, वरणे। वृश्यति। अवृशत्। कृश, तनूकरणे। कृश्यति। अकृशत्। ञितृषा, पिपासायाम्। तृष्यति। अतृषत्। हृष, तुष्टौ। श्यन्नङौ भौवादिकाद्विशेषौ। हृष्यति। अहृषत्। रुष, रिष, हिंसायाम्। रुष्यति। रिष्यति। तीषसहेति तादाविड्विकल्पः। रोषिता। रोष्टा। रेषिता। रेष्टा। अरुषत्। अरिषत्। डिप, क्षेपे। कुप, क्रोधे। गुप, व्याकुलत्वे। युप, रुप, लुप, विमोहने। युप्यति। रुप्यति। लुप्यति। अनिट्सु तौदादिकेन लिपिना साहचर्यात्तौदादिकस्य 'लुप्लृ छेदने' इत्यस्यैव ग्रहणादयं सेडेव। लोपिता। अलुपत्। लुभ, गार्ध्ये। गार्ध्यमाकाङ्क्षा। तीषसहेतीड्विकल्पः। लोभिता। लोब्धा। लोभिष्यति। अलुभत्। क्षुभ, सञ्चलने। क्षुभ्यति। अक्षुभत्। णभ, तुभ, हिंसायाम्। नभ्यति। ननाभ। नेभतुः। अनभत्। तुभ्यति। अतुभत्। क्लिदू, आर्द्रीभावे। क्लिद्यति। चिक्लेद।

चिक्लेदिथ । चिक्लेत्थ । क्लेदिता । क्लेत्ता । ञिमिदा, स्नेहने । मिदेर्गुणः । मेद्यति । अमिदत् । ञिक्ष्विदा, स्नेहनमोहनयोः । क्ष्विद्यति । अक्ष्विदत् । ऋधु, वृद्धौ । ऋध्यति । आनर्ध । आनृधतुः । आर्धत् । आर्धिष्यत् । गृधु, अभिकाङ्क्षायाम् । अगृधत् । वृत् । दिवादयः पुषादयश्च वृत्ताः । अन्येतु पुषादेस्समाप्त्यर्थं वृत्करणम् । दिवादयस्त्वपरिसमाप्ता स्तेन क्षीयते गृध्यति इत्यादिसिद्धमित्याहुः ।

इतिश्यन्विकरणो दिवादिगणः समाप्तः ।

# अथ स्वादिगणः

षुञ्, अभिषवे अभिषवः-स्नपनं पीडनं, स्नानं सुरासंधानं च। सुरासंधानं सुरोत्पादनप्रकारः। तत्र स्नानेऽयमकर्मकः।

## स्वादिभ्यः श्नुः ॥ ३ । १ । ७३ ॥

षुञ् अभिषवे इत्येवमादिभ्यो धातुभ्यः श्नुप्रत्ययो भवति। शपोऽपवादः। सुनुतः। हुश्नुवोरितियण्। सुन्वन्ति। सुनोषि। लोपश्चास्येति उलोपो सुनोमि। वा। सुन्वः। सुनुवः। सुन्मः। सुनुमः। सुनुते। सुन्वाते। सुन्वते। सुषाव। सुषुविव। सुषुवे। सोता। सोष्यति। सोष्यते। सुनोतु। सुनुतात्। सुनु। सुनुताम्। असुनोत्। सुनुयात्। सुन्वीत। सूयात्। सोषीष्ट। असावीत्। असोष्ट। असोष्यत्। असोष्यत।

## सुनोतेः स्यसनोः ॥ ८ । ३ । ११७ ॥

सुनोतेः सकारस्य मूर्धन्यादेशो न भवति स्ये सनि च परतः। विसोष्यति। षिञ्, बन्धने। सिनोति। विसिनोति। सिषाय। सिष्ये। सेता। सेष्यति। शिञ्, निशाने। शिनोति। शिनुते। शेता। डुमिञ्, प्रक्षेपणे। मिनोति। मिनुते। मीनातिमिनोतीत्यात्वम्। ममौ। मिम्यतुः। मिम्युः। ममाथ। ममिथ। मिम्ये। मिम्याते। माता। मिनोतु। मीयात्। मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त। अमास्यत। चिञ्, चयने। चिनोति। चिनुतः। चिनुते।

## विभाषा चेः ॥ ७ । ३ । ५८ ॥

चिनोतेरङ्गस्य सन्लिटोरभ्यासादुत्तरस्य विभाषा कवर्गादेशो भवति। प्रणिचिकाय। चिचाय। चिक्ये। चिच्ये। चेता। चेष्यति। चेष्यते। चिनोतु। चिनुताम्। अचिनोत्। अचिनुत। चिनुयात्। चिन्वीत चीयात्। चेषीष्ट। अचैषीत्। अचेष्ट। अचेष्यत्। अचेष्यत। स्तृञ्, आच्छादने। स्तृणोति। स्तृणुते। तस्तार। तस्तर्थ। तस्तरे। स्तर्ता। स्तरिष्यति। स्तरिष्यते। ऋद्धनोरितीट्। स्तृणोतु, स्तृणुताम्। गुणोर्तीतिगुणः। स्तर्यात्।

## ऋतश्च संयोगादेः ॥ ७। २। ४३ ॥

ऋदन्ताद्धातोः संयोगादेरुत्तरयोर्लिङ्सिचोरात्मनेपदेषु वा इडागमो भवति। स्तरिषीष्ट। पक्षे, स्तृषीष्ट। अस्तरिष्ट। अस्तृत। अस्तारीत्। अस्तार्ष्टाम्। कृञ्, हिंसायाम्। कृणोति। कृणुते। चकार। चक्रे। कर्त्ता। करिष्यति। करिष्यते। कृणोतु। कृणुताम्। अकृणोत्। अकृणुत। कृणुयात्। कृण्वीत। रिङ्शयेतिरिङादेशः। क्रियात्। कृषीष्ट। अकार्षीत्। अकृत। अकरिष्यत्। अकरिष्यत। वृञ्, वरणे। वृणोति। वृणुते। ववार। वव्रतुः।

## बभूयाततन्थजगृम्भववर्थेति निगमे ॥ ७। २। ६४ ॥

बभूथेत्यादाविडभावो निपात्यते निगमे। तेन भाषायां थलीट्। ववरिथ। ववृव। ववृम। वव्रे। वरिता। वरीता। वरीष्यति। वरिष्यति। वरिष्यते। वरीष्यते। वृणोतु। वृणुताम्। अवृणोत्। अवृणुत। वृणुयात् वृण्वीत। व्रियात्।

## लिङ्सिचोरात्मनेपदेषु ॥ ७। २। ४२ ॥

वृतो लिङि सिचि च आत्मनेपदे परे वा इडागमो भवति।

## न लिङि ॥ ७ । २ । ३९ ॥

वृत उत्तरस्य इटो लिङि दीर्घो न भवति । वरिषीष्ट । वृषीष्ट । अवारीत् । अवरिष्ट । अवरीष्ट । अवृत । अवरिष्यत् अवरिष्यत् । धुञ् कम्पने । धुनोति । धुनुते । अधौषीत् । अधोष्यत् । दीर्घान्तोऽपीत्येके । धूनोति । धूनुते । दुधाव । दुधुवे । दुधुविथ । दुधोथ । दुधुविव । धविता । धोता । धविष्यति । धोष्यति । धूनोतु । अधावीत् । अधविष्यत । अधोष्यत । स्वादय उभयतो भाषा वृञ्वर्जमनुदात्ताः । अथ परस्मैपदिनो नव । टुदु, उपतापे । दुनोतीत्यादि धुनोतिवत् । हि, गतौ वृद्धौ च । हिनोति ।

## हिनुमीना ॥ ८ । ४ । १५ ॥

हिनु मीना इत्येतयोरुपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति । प्रहिणोति ।

## हेरचङि ॥ ७ । ३ । ५६ ॥

हिनोतेर्हकारस्याभ्यासादुत्तरस्य कवर्गादेशो भवति अचङि । जिघाय । जिघ्यतुः । जिघेथ । हिनोतु । अहैषीत् । पृ, प्रीतौ । पृणोति । पर्त्ता । अपार्षीत् । स्पृ, प्रीतिपालनयोः । प्रीतिचलनयोरित्यन्ये । स्पृणोति । पस्पार । स्पर्त्ता । अस्पार्षीत् । स्मृ, इत्येके । स्मृणोति । सस्मार । सस्मर्थ । स्मर्यात् । पृणोत्यादयश्छान्दसा इत्याहुः । आप्लृ, व्याप्तौ । आप्नोति । आप्नुतः । आप्नुवन्ति । आप्नुवः । आप्ता । आप्स्यति । आप्नोतु । आप्नुहि । लृदित्वादङ् । आपत् आप्स्यत् । शक्लृ, शक्तौ । शक्नोति । शशाक । अशकत् ॥ अशक्ष्यत् । राध, साध, संसिद्धौ राध्नोति । रराध ।

आक्षेपो निन्दा। स्खरयति। रच, प्रतियत्ने। रचयति। कल; गतौ संख्याने च। कलयति। चह, परिकल्कने। परिकल्कनं, दम्भः। चहयति। अचचहत्। मह, पूजायाम्। महयति। सार, कृप, श्रथ, दौर्बल्ये। सारयति। कृपयति। स्पृह, ईप्सायाम्। स्पृहयति। भाम, क्रोधे। भामयति। अबभामत्। सूच, पैशुन्ये। सूचयति। अषोपदेशत्वान्न षत्वम्। असूसुचत्। खेट, भक्षणे। खेटयति। तृतीयान्त इत्येके। खोट, इत्यन्ये। क्षोट, क्षेपे। क्षोटयति। अचुक्षोटत्। गोम, उपलेपने। गोमयति। अजुगोमत्। कुमार, क्रीडायाम्। कुमारयति। अचुकुमारत्। शील, उपधारणे। उपधारणमभ्यासः। शीलयति। अशिशीलत्। साम, सान्त्वप्रयोगे। अससामत्। साम सान्त्वनइति पठितस्येह पाठोऽग्लोपित्वादससामदिति सिद्धये। बेल, कालोपयोगे। बेलयति। काल इति पृथग्धातुरित्येके। तन्मते। कालयति। पल्यूल, लवनपवनयोः। पल्यूलयति अपपल्यूलत्। वात, सुखसेवनयोः। गतिसुखसेवनेष्वित्येके। वातयति। अववातत्। गवेष, मार्गणे। गवेषयति, अजगवेषत्। वास, उपसेवायाम्। वासयति। निवास, आच्छादने। निवासयति। अनिनिवासत्। भाज, पृथक्कर्मणि। विभाजयति। अबभाजत्। सभाज, प्रीतिदर्शनयोः। प्रीतिसेवनयो रित्यन्ये। सभाजयति। अससभाजत्। ऊन, परिहाणे। ऊनयति। ओः पुयण्ज्यीति सूत्रे पयपोरितिवक्तव्ये वर्णप्रत्याहारग्रहणं लिङ्गं णिच्यच आदेशो न स्याद्द्वित्वे कार्ये इति। यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याचोऽचू प्रक्रियायां परिनिष्ठिते रूपे

[१] पिपविपते, युयविपतोत्यत्रोवर्णान्तस्यैवादेशनिर्देशाद् द्वित्वेनाभ्यासोवर्णस्येत्यार्थं पयपो रित्यपेक्षितम्।

[२] औजढत्, चुक्षावयिपतोत्यादि सिद्ध्यर्थं तथोक्तिः।

वाऽवर्णो लभ्यते तत्रैवायं निषेधः, ज्ञापकस्य सजातीयापेक्षत्वात्। तेनाचिकीर्तदिति सिद्धम्। प्रकृते तु 'न' शब्दस्य द्वित्वं ततउत्तरखण्डेऽल्लोपः। औनेनत्। मा भवानूननत्। ध्वन, शब्दे। अदध्वनत्। वेदे अध्वनयीत्। कूट, परितापे। परिदाहे इत्यन्ये। कूटयति। अचुकूटत्। सङ्केत, ग्राम, कुण, गुण, चामन्त्रणे। चकारेण कूट इत्यपेक्षत इत्येके। कूटयति। सङ्केतयति। ग्रामयति। कुणयति। गुणयति। अपरे तु। केत, श्रावणे निमन्त्रणे च। केतयति। निकेतयति। कुण, गुण चामन्त्रणे। चकारात्केत। कूण सङ्कोचने इति। स्तेन, चौर्य्ये। अनेकाच्त्वादषोपदेशत्वम्। स्तेनयति। अतिस्तेनत्। आगर्वादात्मनेपदिनः। इतः परे गर्व माने इति वक्ष्यमाणपर्य्यन्तादात्मनेपदिनः। पद, गतौ। पदयते। अपपदत्। गृह, ग्रहणे। गृहयते। मृग, अन्वेषणे। मृगयते। मृग्यतीति कण्ड्वादौ। कुह, विस्मापने। कुहयते। शूर, वीर, विक्रान्तौ। शूरयते। अशुशूरत। वीरयते। स्थूल, परिबृंहणे। स्थूलयते। अर्थ, उपयाञ्चायाम्। अर्थयते। आर्तथत। सत्र, सन्तानक्रियायाम्। अससत्रत। गर्व, माने। गर्वयते। इत्यागर्वीयाः। सूत्र, वेष्टने। विमोचन इत्यन्ये। सूत्रयति। असुसूत्रत्। मूत्र, प्रस्रवणे। मूत्रयति। अमुमूत्रत्। रूक्ष, पारुष्ये। रूक्षयति। अरुरूक्षत्। पार, तीर कर्मसमाप्तौ। पारयति। तीरयति। अपपारत्। अतितीरत्। पुट, संसर्गे। पुटयति। धेक, दर्शन इत्येके। अदिधेकत्। कत्र, शैथिल्ये। कत्रयति। अचकत्रत्। कर्त्त, इत्यप्येके। कर्त्तयति। (प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च) प्रातिपदिकाद्धात्वर्थे णिच् तस्मिंश्चेष्ठनीव कार्य्यम्। इदञ्च तत्करोतीति, तदाचष्टे, तेनातिक्रामतीनां वक्ष्यमाणत्वात्तद्विषयं, तदादीन्यस्यैव प्रपञ्चभूतानीत्यर्थः। पटुमाचष्टे। पटयति। लघयतीत्यादि। अपीपटत्। अलीलघत्। अत्र परत्वाद्वृद्धौ, णाविष्ठवदिति टिलोपः। णौच-

[ १ ] केचिद् भाष्यानुसारिणस्तु द्वित्वप्रवृत्तिवेलायाम वर्णपरत्वसम्पादकादेशस्थानिनोऽच आदेश इत्याद्युक्त्वा औनिनदित्येवाभिप्रयन्ति।

ञीत्यत्र भाष्ये तु वृद्धेर्लोपो बलीयानिति स्थितम् । एवं च, आपटत् इत्यपि साध्विति । तत्करोति तदाचष्टे ॥ ग० ॥ तदितिद्वितीयान्तोपलक्षणम् । तत्करोत्याचष्टे इत्यत्र धात्वर्थमात्रं णिजर्थो, न कर्त्तापि तथा चैवोदाहृतम् । तेनातिक्रामति ॥ ग० ॥ अत्रापि तेनेति तृतीयान्तोपलक्षणम् । अश्वेनातिक्रामति अश्वयति । हस्तिनाऽतिक्रामति, हस्तयति । धातुरूपञ्च । ग० ॥ णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते । चकारोऽनुक्तसमुच्चयार्थस्तथाच हेतुमतिचेति सूत्रे वार्तिकम् [ आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमिति ] दुष्टवधमाचष्टे दुष्टं हन् इ इति स्थिते ।

## हनस्तोऽचिण्णलोः ॥ ७ । ३ । ३२ ॥

हनस्तकारादेशो भवति ञ्णिति प्रत्यये परतः चिण्णलौ वर्जयित्वा । दुष्टमजीघतत् । कर्तृकरणाद्धात्वर्थे ॥ ग० ॥ अत्र कर्तृग्रहणं, करणस्य विशेषणम् । कर्तुः करणाद्धात्वर्थे णिजिति सूत्रार्थः । करिभिरवबध्नाति अवकरयति । असिना हन्ति असयति । परशुना छिनत्ति-परशयति । दात्रेण लुनाति-दात्रयति । वष्क दर्शने । वष्कयति । चित्र, करणे । आलेख्यकरण इत्यर्थः । चित्रयति । अचिचित्रत् । कदाचिद्दर्शने ॥ ग० ॥ चित्र इत्ययं कदाचिद्दर्शनेऽद्भुतदर्शने णिचमुत्पादयतीत्यर्थः । चित्रयति । अँस, समाघाते । अँसयति । वट, विभाजने । वटयति । लज, प्रकाशने । लजयति । वटि, लजि, इत्येके । वण्टयति । लञ्जयति । मिश्र, सम्पर्के । मिश्रयति । संग्राम युद्धे । अयमनुदात्तेत् । अकारप्रश्लेषात् । संग्रामयते । असंसंग्रामत । स्तोम, श्लाघायाम् । स्तोमयति । छिद्र, कर्णभेदने । छिद्र-

[ १ ] अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये । वण्टापयति । लञ्जापयति ।
[ २ ] तेन प्रश्लिष्टस्येत्संज्ञा प्रकृत्यकारस्य तु इष्ठवदिति टिलोपः । तथा चाग्लोपादससंग्रामतेत्यत्र नोपधाह्रस्वः इति कैयटादयः परेतु मानाभावान्नैतत्क्षमन्ते इत्यन्यत्र विस्तरः ।

यति। करणभेदन इत्येके। कर्णेति धात्वन्तरमित्यन्ये। अन्ध, दृष्टयुपघाते। उपसंहारइत्यन्ये। अन्धयति। आन्दधत्। दण्ड, दण्डनिपातने। दण्डयति। अददण्डत्। अङ्क, पदे लक्षणे। च। अङ्कयति। आञ्चकत्। अङ्ग, च। अङ्गयति। आञ्जगत्। सुख, दुःख, तत्क्रियायाम्। सुखयति। दुःखयति। रस, आस्वादनस्नेहनयोः। रसयति। व्यय, वित्तसमुत्सर्गे। व्ययति। अवव्ययत्। रूप, रूपक्रियायाम्। रूपस्य दर्शनं करणं वा रूपक्रिया। रूपयति। अरुरूपत्। छेद, द्वैधीकरणे। छेदयति। अचिच्छेदत्। छद, अपवारण इत्येके। छदयति। लाभ, प्रेरणे। लाभयति। व्रण, गात्रविचूर्णने। व्रणयति। वर्ण, वर्णक्रियाविस्तारगुणवचनेषु। वर्णक्रिया, वर्णकरणं। सुवर्णं वर्णयति। कथां वर्णयति। विस्तृणातीत्यर्थः। राजानं वर्णयति स्तौतीत्यर्थः। बहुलमेतन्निदर्शनम्। चुरादावदन्तधातुनिदर्शनं बहुलं वेदितव्यम्। अतोऽनुक्ता अपीह धातवो वेदितव्याः। तद्यथा। पर्ण, हरितभावे। पर्णयति। विष्क, दर्शने। विष्कयति। क्षप, प्रेरणे। क्षपयति। वस, निवासे। वसयति। तुत्थ, आवरणे। तुत्थयति। एवं गडयति। आन्दोलयति। डलयति। वर्णयति। स्फुटयति। प्रेङ्खोलयतीत्यादि। अन्ये तु। भ्वादिष्वेतदन्तेषु दशगणेषु धातूनां पाठो निदर्शनाय। तेन स्तम्भुप्रभृतयः सौत्राः। चुलुम्पादयो वाक्यकारीयाः प्रयोगाः सिद्धाः। विक्लवत्यादयश्च गृह्यन्त इति।

विगलन्त्याशु जीमूता विक्लवन्ते दिवि ग्रहाः॥
क्षयन्ति विद्युतः प्रावृट् क्षोयन्ते कामविग्रहाः॥ १॥

इत्यादयः प्रयोगा उपपद्यन्त इत्याहुः। णिङङ्गान्निरसने। ग०। अङ्गवाचिनः प्रातिपदिकान्निरसने णिङ्। ङकार आत्मनेपदार्थः। हस्तौ निरस्यति हस्तयते। पादयते। श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च॥ ग०॥ श्वेताश्वादीनां चतुर्णां यथासंख्यमश्वतरेतत-

कइत्येते लुप्यन्ते । णिङ् च धात्वर्थे । श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते । एवमश्वयते । गालोडयते । गालोडितं वाचांविमर्शः । हरयते । केचित्तु णिचमेवानुवर्तयन्ति । तन्मते परस्मैपदमपि । पुच्छादिषु धात्वर्थ इत्येव सिद्धम्[1] । पुच्छादिषु प्रातिपदिकेभ्यो धात्वर्थ इत्येव सिद्धमिति केचित् । आत्मनेपदं णिजन्ताद् बहुलवचनाद्विज्ञेयमिति । अन्ये तु पुच्छादीनां पुच्छभाण्डेत्यनेन णिङुक्तत्वादिह णिङ् नास्तीति व्याचक्षते । पुच्छमुदस्यति उत्पुच्छयते । भाण्डानि समाचिनोति सम्भाण्डयते । चीवराण्यर्जयति परिधत्ते वा संचीवरयते ।

## इति चुरादिगणः समाप्तः ।

[ १ ] भीमसेनस्य वाक्यमेतदिति ज्ञानेन्द्रसरस्वती । केचित्तु गणसूत्रमेव मन्यन्ते ।

# * अथ कण्ड्वादयः *

## कण्ड्वादिभ्यो यक् ॥ ३ । १ । २७ ॥

कण्डूञ् इत्येवमादिभ्यो यक् प्रत्ययो भवति । "धातुप्रकरणाद्धातुः, कस्य चासञ्जनादपि । आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥" एते धातवः प्रातिपदिकानि च[1] ।

कण्डूञ्[2], गात्रविघर्षणे । कण्डूयति । कण्डूयते । कण्डूयाञ्चक्रे । कण्डूयिता । कण्डूयिष्यति । कण्डूयतु । अकण्डूयत् । कण्डूयेत् कण्डूय्यात् अकण्डूयीत् । अकण्डूयिष्यत् । मन्तु, अपराधे । रोष इत्येके । मन्तूयति । कश्चिदिमं ञितमाह । वल्गु, पूजामाधुर्ययोः । वल्गूयति । असु, उपतापे । असूयति । अस्, असूञ्, इत्येके । अस्यति । असूयति । असूयते । लेट्, लोट्, धौर्त्ये पूर्वभावे स्वप्ने च । दीप्तावित्येके । लेट्यति । लोट्यति । लेटिता । लोटितेत्यादि । लेला, दीप्तौ । लेलायति । इरस्, इरज्, इरञ्, ईर्ष्यायाम् । इरस्यति । इरज्यति । ईर्यति । ईर्यते । इय्, ऐश्वर्ये इत्यपीति केचित् । उषस्, प्रभातीभावे । उषस्यति । वेद, धौर्त्ये, स्वप्ने च । वेद्यति । मेधा, आशुग्रहणे । मेध्यति । कुषुभ्, क्षेपे । कुषुभ्यति मगध, परिवेष्टने । नीचदास्य इत्यन्ये । मगध्यति । तन्तस्, पम्पस्, दुःखे । सुख, दुःख, तत्क्रियायाम् । सुख्यति । दुःख्यति । सुखं दुःखं चानुभवतीत्यर्थः । सपर, पूजायाम् । सपर्यति । अरर,

---

[१] गुणनिषेधार्थेन ञित्वेन धातुत्वं, केषांचित् कण्ड्वादीनां दीर्घान्तपाठाच्च प्रातिपदिकत्वमवसीयते ।

[२] अवयवे कृतं लिङ्गमिति न्यायात्समुदायस्य ञित्वादात्मनेपदम् ।

आगःकर्म्मणि । अरर्यति । भिषज, चिकित्सायाम् । भिषज्यति । भिष्णज्, उपसेवायाम् । भिष्णज्यति । इषुध, शरधारणे । इषुध्यति । चरण, वरण, गतौ । चरण्यति । वरण्यति । चुरण, चौर्य्ये । चुरण्यति । तुरण, त्वरायाम् । तुरण्यति । । भुरण, धारणपोषणयोः । भुरण्यति । गद्गद, वाक्स्खलने । गद्गद्यति । एला, केला, खेला, विलासे । एलायति । केलायति । खेलायति । इला, इत्यन्ये । इलायति । खेला, स्खलने च । लेखेति केचित् । अदन्तोऽप्ययमित्यन्ये । खेल्यति । लिट्, अल्पकुत्सनयोः । लिट्यति । लाट, जीवने । लाट्यति । हृणीङ्, रोषणे लज्जायाञ्च । हृणीयते । महीङ्, पूजायाम्[1] महीयते । रेखा, श्लाघाऽऽसादनयोः[2] । रेखायति । द्रवस् परितापपरिचरणयोः । द्रवस्यति । तिरस्, अन्तर्द्धौ । तिरस्यति । अगद, नीरोगत्वे । अगद्यति । उरस्, बलार्थे । उरस्यति । तरण, गतौ । तरण्यति । पयस्, प्रसृतौ । पयस्यति । संभूयस्, प्रभूतभावे । सम्भूयस्यति । अम्बर, सम्बर, संभरणे । अम्बर्यति । सम्बर्यति । आकृतिगणोऽयम् । अस्याकृतिगणत्वाद्धैधनादिभ्यो रायति धनायतीत्याद्यपि ।

इति कण्ड्वादिप्रक्रिया समाप्ता ॥

[१] पूज्यमानकर्तृकाऽत्र सा । महीयते-पूजामधिगच्छतीत्यर्थः ।
[२] आसादनं-प्राप्तिः ।

# अथ नामधातवः ।

## सुप आत्मनः क्यच् ॥ ३ । १ । ८ ॥

इषिकर्मण एषितुरेवात्मसम्बन्धिनः सुबन्तादिच्छायामर्थे वा क्यच् प्रत्ययो भवति । धात्ववयवत्वात् सुब्लुक् । [ १ ]

## क्यचि च ॥ ७ । ४ । ३३ ॥

क्यचि परतोऽवर्णान्तस्याङ्गस्य ईकारादेशो भवति । आत्मनः पुत्रमिच्छति पुत्रीयति । वान्तो यि प्रत्यये । गव्यति । नाव्यति । लोपः शाकल्यस्येति तु न । अादान्तत्वात् । तथा हि ।

## नः क्ये ॥ १ । ४ । १५ ॥

क्य इति क्यच् क्यङ् क्यषां सामान्यग्रहणम् । नान्तं शब्दरूपं क्ये परतः पदसंज्ञं भवति । क्ये परतो नान्तमेव पदम् । सन्निपातपरिभाषया क्यचो यस्य लोपो न । गव्याञ्चकार । गव्यिता । नाव्याञ्चकार । नाव्यिता । न लोपः । राजीयति । राजीयाञ्चकार । राजीयिता ।

---

[ १ ] पदविधित्वेन समर्थपरिभाषाप्रवृत्त्या महान्तं पुत्रमिच्छतीत्यादेर्वाक्यान्न

[ २ ] गोसमानाक्षरनान्तादिति त्वेकदेशिमतं न सिद्धान्तः । अतएव नःक्ये इति सूत्रे वाच्यतीतिभाष्ये प्रयुक्तम् । वाच्यतीत्यत्र संप्रसारणं तु न, धातोः कार्य्यमुच्यमानमित्युक्तत्वात् ।

[ ३ ] क्यचिचेत्यवर्णस्य ईत्वे कर्त्तव्ये पूर्वत्रासिद्धमिति न लोपोऽसिद्धो न भवति "नलोपः सुप्स्वर" इति नियमात् ।

राजीयिष्यति । राजीयतु । अराजीयत् । राजीयेत् । राजीय्यात् । अराजीयीत् । अराजीयिष्यत् । प्रत्ययोत्तरपदयोश्च । त्वद्यति । मद्यति । एकार्थयोरित्येव । युष्मद्यति । अस्मद्यति । अन्तमौ न । आत्मनो गिरमिच्छति । हलिचेति दीर्घः । गीर्यति । पूर्यति । धातोरित्येव । नेह । दिवमिच्छति दिव्यति । अदस्यति । आत्मनः कर्तारमिच्छति । रीङ् ऋत इति रीङादेशः । कर्त्रीयति ।

## क्यच्व्योश्च ॥ ६ । ४ । १५२ ॥

क्यच्वि इत्येतयोश्च परत आपत्ययकारस्य हल उत्तरस्य लोपो भवति । गार्गीयति । वात्सीयति । वाच्यति । अकृत्सार्वधातुकेति दीर्घः । कवीयति । समिध्यति ।

## क्यस्य विभाषा ॥ ६ । ४ । ५० ॥

क्यस्य हल उत्तरस्य विभाषा लोपो भवति आर्धधातुके । आदेः परस्य । अतो लोपः । तस्य स्थानिवत्त्वाल्लघूपधगुणो न । समिधिता । समिध्यिता । [ क्यचि मान्तोऽव्ययप्रतिषेधः ] इदमिच्छति । किमिच्छति । उच्चैरिच्छति । स्वरिच्छतीत्यादि ।

## अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु ॥ ७ । ४ । ३४ ॥

अशनाय उदन्य धनाय इत्येता निनिपात्यन्ते बुभुक्षापिपासागर्द्धे इत्येतेष्वर्थेषु । अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् । अशनीयति । उदकीयति । धनीयति ।

[ १ ] मान्तप्रकृतिकसुबन्तादित्यर्थस्तेन पुत्रमिच्छतीत्यादौ न दोषः ।
[ २ ] उदक शब्दस्योदन्भावोऽन्ययोर्दीर्घइति । इह य सद्य पथभोक्तुमशनमिच्छति, यश्चपातुमुदकं, यश्च धने सत्यपि पुनर्धनं तत्रोदाहरणानि ।

## न च्छन्दस्यपुत्रस्य ॥ ७ । ४ । ३५ ॥

छन्दसि विषये पुत्रवर्जितस्या वर्णान्तस्याङ्गस्य क्यचि यदुक्तं तन्न भवति। किञ्चोक्तम्, दीर्घत्वमीत्त्वञ्च। मित्रयति। अपुत्रस्येति किम्। पुत्रीयन्तः सुदानवः। अत्यल्पमिदमुच्यते। (अपुत्रादीनामिति वक्तव्यम्) इहापि यथास्यात्। जनीयन्तोऽन्वग्रवः।

## क्याच्छन्दसि ॥ ३ । २ । १७० ॥

क्य[२] प्रत्ययान्ताद्धातोश्छन्दसि विषये तच्छीलादिषु कर्तृषु उकारप्रत्ययो भवति। मित्रयुः। संस्वेदयुः। देवाञ्जिगातिसुम्नयुः।

## दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति ॥ ७ । ४ । ३६ ॥

दुरस्युः, द्रविणस्युः वृषण्यति रिषण्यति एतानि छन्दसि निपात्यन्ते[३]। दुष्टमिच्छति दुरस्युः। दुष्टीयत्यन्यत्र। द्रविणमिच्छति द्रविणस्युः। द्रविणीयत्यन्यत्र। वृषमिच्छति, वृषण्यति। वृषीयत्यन्यत्र। रिष्टमिच्छति, रिषण्यति। रिष्टीयत्यन्यत्र।

## अश्वाघस्यात् ॥ ७ । ४ । ३७ ॥

अश्व अघ इत्येतयोः क्यचि परतश्छन्दसि विषये आकारादेशो भवति। अश्वायन्तो मघवन्। मा त्वावृका अघायवो विदन्। लोके। अश्वीयति। अघीयति।

---

४८-यस्तु कालान्तरोपयोगार्थमशनमिच्छति, यश्चस्नातुमुदकं, यश्च-दरिद्रः सन्धनमिच्छति, तत्र प्रत्युदाहरणानि।

[१]-निषेधोऽयमीत्वमात्रस्य न, किन्तु दीर्घस्यापि। अश्वाघस्यादितिसूत्रमेवात्रज्ञापकम्। अन्यथादीर्घेणैवसिद्धत्वादात्ववचनमनर्थकमेवस्यात्॥

[२] क्यइतिक्यच्क्यङ्क्यषांसामान्येन ग्रहणम्।

[३] अत्रदुष्टशब्दस्य-दुरस्। द्रविणशब्दस्य-द्रविणस्। वृषस्य-वृषण्। रिष्टस्यरिषण्भावो निपात्यते।

## देवसुम्नयोर्यजुषि काठके ॥ ७ । ४ । ३८ ॥

देव सुम्न इत्येतयोः क्यचिपरत आकारादेशोभवति यजुषि काठके । देवायन्तो यजमानाः । सुम्नायन्तो हवामहे । यजुर्ग्रहणात् । देवाञ्जिगाति सुम्नयुः । अत्र न । काठकग्रहणात् । सुम्नयुरिदमासीत् । अत्र न ।

## कव्यध्वरपृतनस्यर्चि लोपः ॥ ७ । ४ । ३९ ॥

कवि अध्वर पृतना इत्येतेषामङ्गानां क्यचिपरतो लोपो भवति ऋग्विषये । कव्यन्तः सुमनसः । अध्वर्यन्तः । पृतन्यन्तस्तिष्ठन्ति ।

## अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ ७ । १ । ५१ ॥

अश्व क्षीर वृष लवण इत्येतेषामङ्गानामात्मप्रीतिविषये क्यचि परतो ऽसुगागमो भवति । ( अश्ववृषयोर्मैथुनेच्छायाम् ) अश्वस्यति वडवा । वृषस्यति गौः । ( क्षीरलवणयोर्लालसायाम् ) क्षीरस्यति बालः । लवणस्यति उष्ट्रः । आत्मप्रीतावेव । नेह । अश्वीयति । अपर आह— ( सर्वप्रातिपदिकेभ्यो लालसायामिति वक्तव्यम् ) दध्यस्यति । मध्वस्यति ( सुग्वक्तव्यः ) दधिस्यति । मधुस्यति ।

## काम्यच्च ॥ ३ । १ । ९ ॥

सुबन्तात्कर्मण आत्मेच्छायां काम्यच् प्रत्ययो भवति । आत्मनः पुत्रमिच्छति । पुत्रकाम्यति । वस्त्रकाम्यति । यशस्काम्यति । सर्पिष्काम्यति मान्ताव्ययेभ्योऽपि । किंकाम्यति । स्वःकाम्यति । उच्चैःकाम्यति ।

## उपमानादाचारे ॥ ३ । १ । १० ॥

[ १ ] वार्तिकमिदं दधिमधुशब्द विषयकमेवेति माधवः ।

उपमानात्कर्मणः सुबन्तादाचारेऽर्थे वा क्यच् प्रत्ययो भवति, सकारस्य च लोपो भवति । पुत्रमिवाचरति पुत्रीयति शिष्यम् । मित्रीयति शत्रुम् । इत्यादि । ( अधिकरणाच्च ) कुट्यामिवाचरति कुटीयति प्रासादे । प्रासादीयति कुट्याम् । पर्य्यङ्कीयति मञ्चके ।

## कर्त्तुः क्यङ् सलोपश्च ॥ ३ । ११ ॥

उपमानात्कर्त्तुः सुबन्तादाचारेऽर्थे वा क्यङ् प्रत्ययो भवति, सकारस्य च लोपोभवति । ( सलोपश्च वा ) ( ओजसोऽप्सरसो नित्यम् ) श्येन इवाचरति श्येनायते काकः । पण्डितायते मूढः । राजायते । पथीयते । ओजश्शब्दो वृत्तिविषये तद्वति । ओजस्वीवाचरतीति । ओजायते । अप्सरायते । यशायते यशस्यते । विद्वायते । विद्वस्यते । लघ्यते । मद्यते । अनेकार्थत्वे तु । युष्मद्यते । अस्मद्यते । क्यङ्मानिनोश्च । कुमारीवाचरति । कुमारायते । हरिणीवाचरति, हरिणायते । गुर्वीव गुरूयते । सपत्नीव सपत्नायते । सपतीयते । सपत्नीयते । युवतिरिव युवायते । पट्वीमृद्व्याविव पट्वीमृदूयते । न कोपधायाः । पाचिकायते । ( आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा ) पक्षे क्यङ् । अवगल्भते । क्लीबते । होडते । पक्षे अवगल्भायते । क्लीबायते । होडायते । भूतपूर्वादप्यनेकाच आम् । एतद्वार्तिकारम्भसामर्थ्यात् । नचावगल्भतइत्यादिसिद्धिस्तत्फलम् । केवलानामेवाचारेऽपि वृत्तिसंभवात् । धातूनामनेकार्थत्वात् । अवगल्भाञ्चक्रे । अवगल्भिष्यते । एवं क्लीबाञ्चक्रे । होडाञ्चक्रे । ( सर्वप्रातिपदिकेभ्य आचारे क्विब्वा वक्तव्यः ) अश्व इवाचरति

---

[ १ ] नान्तस्यैव पदत्वात्सस्य रुत्वं न ।

[ २ ] शत्रुपर्यायात्सपत्न शब्दाच्छार्ङ्गरवादिङीनन्तात्क्यङि पुम्बद्भावेऽकृत्सार्व धातुकेति दीर्घेच रूपमिदम् ।

[ ३ ] अवगल्भादयः पचाद्यजन्ताः । क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वञ्चाच्प्रत्ययस्य प्रतिज्ञायते । तेन तङ् । वार्तिकेऽवेत्युपसर्गविशिष्टपाठात् केवलादुपसर्गान्तर विशिष्टाच्च तङ् न ।

अश्वति । अश्वायते । गर्दभायते । अ इवाचरति, अति । अतः । अन्ति । लिटि । औ[illegible] । कविरिवाचरति । कवयति । आशीर्लिङि । कवीयात् । अकवयीत् । केचिन्नामधातोरपि वृद्धिमिच्छन्ति । अकवायीत् । विरिवाचरति । वयति । विवाय । विव्यतुः । अवयीत् । अवायीत् । श्रीरिवाश्रयति । [illegible] । शिश्राय । शिश्रियतुः । शिश्रियुः । श्रीयात् । पितेवाचरति पितरति । आशिषि रिङ् । पित्रियात् । भूरिवाचरति । भवति । अत्रगातिस्थेति, भुवोवुगिति, भवतेर इति च नभवन्ति । अभिव्यक्तत्वेन धातुपाठस्थस्यैव तत्र ग्रहणात् । बुभाव । अभावीत् । द्रुरिव द्रवति । णिश्रीति चङ् न । अद्रावीत् ।

## भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ ३ । १ । १२ ॥

भृश इत्येवमादिभ्यः प्रतिपदिकेभ्योऽच्व्यन्तेभ्यो भुवि भवत्यर्थेक्यङ् प्रत्ययो भवति हलन्तानाञ्च लोपः । अभृशो भृशो भवति भृशायते । अच्वेरिति पर्युदासबलादभूततद्भाव इतिलब्धम् । तेनेह न । क्व दिवा भृशा भवन्ति । ये रात्रौभृशा[1] नक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थः । सुमनस् । अस्यसलोपः । सुमनायते । सुमनायाञ्चक्रे । सुमनायिता । सुमनायिष्यते । सुमनायताम् । चुरादौ संग्रामयुद्धे इतिपठ्यते तत्र संग्रामेति प्रातिपदिकम् । तस्मात्तत्करोतीति णिच् सिद्धस्तत्सन्नियोगेनानुबन्ध आसज्यते । युद्धे योऽयं ग्रामशब्द इत्युक्तेऽपि सामर्थ्यात्संग्रामशब्दे लब्धे विशिष्टपाठो ज्ञापयति 'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकिर्षिते पृथक्क्रियते' इति तेन मनश्शब्दात्प्रागट् । स्वमनायत । एवंचावागल्भत । अवागल्भिष्टेत्यादावप्यवेत्यस्यपृथक्करणं बोध्यम् । ज्ञापकं च

[१] भृशालोकाइत्यर्थः ।

[२] नत्वयंधातुः असेराचेत्यौणादिकेन मन्प्रत्ययान्ततया निष्पादितत्वात् । एवञ्चवक्ष्यमाणज्ञापकं संगच्छतइतिभावः ।

सजातीयविषयम् । तेन यलोपसर्गरूपं सकलं श्रूयते नत्वादेशेनापहृतं तत्रैव पृथक्कृतिः । एवंच आऊढः ओढः, सइवाचर्यं ओढायित्वा । अत्र उन्मनाय्य, अवगल्भ्येतिवल्ल्यप् । ज्ञापकस्य विशेषविषयत्वे षाष्ठं वार्तिकं तद्भाष्यञ्च प्रमाणम् । तथाहि । ( उस्योमाङ्क्ष्वाटः प्रतिषेधः ) उसिओ-माङोश्च परयोराटः पररूपं नेत्यर्थः । उस्रामैच्छत् । औस्रीयत् । औङ्का-रीयत् । औढीयत् । आटश्चेति चशब्देनपुनर्वृद्धिविधानादिदं सिद्धमिति षाष्ठे स्थितम् ।

## लोहितादिडाज्भ्यः क्यष्[२] ॥ ३ । १ । १३ ॥

लोहितादिभ्यो डाजन्तेभ्यश्च भवत्यर्थे क्यष् प्रत्ययो भवति ।

## वा क्यषः ॥ १ । ३ । ९० ॥

लोहितादिडाज्भ्यः क्यषिति वक्ष्यति तदन्ताद्धातोर्वा परस्मैपदं भवति । अलोहितो लोहितो भवति लोहितायते । लोहितायति । अत्राच्वेरित्यनु-वृत्त्याऽभूततद्भावविषयत्वं लब्धम् । तच्च लोहितशब्दस्यैव विशेषणं न तु डाचोऽसम्भवात् । नाप्यादिशब्दग्राह्याणाम् । तस्य प्रत्याख्यानात् । तथाच वार्तिकम् । ( लोहितादिडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि ) अनीलो नीलो भवति नीलायते पटः । अत्र क्यषन्तादुभयपदं न । लिङ्गविशि-ष्टपरिभाषया लोहिनीशब्दात्क्यष्[३] । लोहिनीयते । इत्यपि । पटपटायति । पटपटायते । कृभ्वस्तियोगं विनापि डाच्, डाजन्तात्क्यषो विधान सामर्थ्यात् ।

[ १ ] उस्रा-गौः ।

[ २ ] उच्चारणसामर्थ्यात् काम्यच इव क्यषोपि ककारः श्रूयेतेतितु न वाच्यं, क्यषः ककारस्य भाष्ये प्रत्याख्यानात् ।

[ ३ ] न तु क्यङ् । क्यङि सति तङेव स्यात्क्यङ् मानिनोश्चेतिपुम्बद्भावश्च ।

## कष्टाय क्रमणे ॥ ३ । १ । १४ ॥

कष्टशब्दाच्चतुर्थीसमर्थात्क्रमणेऽर्थेऽनार्जवे क्यङ् प्रत्ययो भवति । क्रमणमनार्जवः । कष्टाय कर्मणे क्रामति, कष्टायते । कष्टं कर्त्तुं कुटिलमाचरतीत्यर्थः । ( सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् ) कण्वस्य पापस्य चिकीर्षा कण्वचिकीर्षा सा चेह वृत्तिविषये, सत्रादयोऽपि कण्ववचनाः । एवं च पापवचनेभ्यो द्वितीयान्तेभ्यः सत्रादिभ्यश्चिकीर्षायां प्रत्ययइतिवार्त्तिकार्थः । सत्रायते, इत्यादि । अन्यत्र, कष्टं क्रामतीत्यादि विग्रह एव ।

## कर्म्मणोरोमन्थतपोभ्यां वर्त्तिचरोः ॥ ३ । १ । १५ ॥

रोमन्थशब्दात्तपःशब्दाच्च कर्मणो यथाक्रमं वर्तिचरोरर्थयोः क्यङ् प्रत्ययो भवति । कर्म्मणइत्यवयवापेक्षमेकवचनम् । ( हनुचलने इति वक्तव्यम् ) रोमन्थं वर्त्तयति रोमन्थायते । [ तपसः परस्मैपदञ्च ] तपश्चरति तपस्यति । हनुचलने वक्तव्यमित्युक्तत्वात् । कीटो रोमन्थं वर्त्तयतीत्यत्र क्यङ् न ।

## वाष्पोष्मभ्यामुद्वमने ॥ ३ । १ । १६ ॥

वाष्पशब्दादूष्मशब्दाच्च कर्मण उद्वमनेऽर्थेक्यङ् प्रत्ययो भवति । वाष्पमुद्वमति वाष्पायते, ऊष्मायते, [ फेनाच्चेति वक्तव्यम् ] फेनमुद्वमति, फेनायते ।

## शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥ ३ । १७ ॥

शब्द वैर कलह अभ्र कण्व मेघ इत्येतेभ्यः करणे करोत्यर्थेक्यङ् प्रत्ययो भवति । कण्वशब्दः पापवचनः । करणं क्रिया करोत्यर्थः ।

---

[१] चर्बितस्य चर्वणं-रोमन्थः ! मृगैर्बर्तितरोमन्थमुटजाङ्गनभूमिष्विति रघौ ।

शब्दं करोति शब्दायते । एवं वैरायते । कलहायते । अभ्रायते । कण्वायते । मेघायते । पक्षे तत्करोतीति णिजपीष्यत इति केचित् । शब्दयति । ( सुदिनदुर्दिनाभ्याञ्च ) सुदिनं करोति सुदिनायते । दुर्दिनायते । ( नीहाराच्च ) नीहारं करोति, नीहारायते । ( अटाट्टाशीकाकोटापोटासोटापुष्टाप्लुष्टा ग्रहणम् ) पोटा स्त्री पुंसलक्षणा । अटां करोति अटायते । अट्टायते । शीकायते । कोटायते । पोटायते । सोटायते । पुष्टायते । प्लुष्टायते ।

## सुखादिभ्यः कर्तृवेदनायाम् ॥ ।३।१।१८ ॥

सुख इत्येवमादिभ्यः कर्म्मभ्यो वेदनायामर्थेऽनुभवे क्यङ् प्रत्ययोभवति, वेदयितुश्चेत्कर्त्तुः सम्बन्धीनि सुखादीनि भवन्ति । सुखं वेदयते सुखायते । दुःखायते । करुणायते । कृपणायते । इत्यादि । कर्तृग्रहणं किम् । सुखं वेदयते प्रसाधको देवदत्तस्य ।

## नमोवरिवश्चित्रङः क्यच् ॥ ३ । १ । १९ ॥

नमस् वरिवस्, चित्रङ्[२] इत्येतेभ्यो वा क्यच् प्रत्ययोभवति करणविशेषे पूजादौ । नमस्यति देवान् पूजयतीत्यर्थः । वरिवस्यति गुरून् । शुश्रूषत इत्यर्थः । चित्रीयते । विस्मयते इत्यर्थः । विस्मापयत इत्यन्ये ।

## पुच्छभाण्डचीवराण्णिङ् ॥ ३ । १ । २० ॥

पुच्छ भाण्ड चीवर इत्येतेभ्योणिङ् प्रत्ययो भवति, करणविशेषे । ङकारस्तङर्थः ( पुच्छादुदसने[३] व्यसने पर्य्यसनेच ) विविधं विरुद्धं वोत्क्षेपणं

[ १ ] यन्निष्ठ सुखं तद्भिन्नो वेदनाकर्तेति वाक्यमेव ।
[ २ ] चित्रङः क्यज्विधानमोत्त्वार्थं ङित्करणन्तुतङर्थम् ।
[ ३ ] पुच्छादयः स्वकर्मकोदसनक्रियादौ लाक्षणिकाः । ततः स्वार्थेणिङ् । णाविष्ठवदितिटिलोपः ।

व्यसनम् । पुच्छमुदस्यति उत्क्षिपति । उत्पुच्छयते । विपुच्छयते । परिपुच्छयते । ( भाण्डात्समाचयने ) भाण्डानि समाचिनोति, सम्भाण्डयते । राशीकरोतीत्यर्थः । समबभाण्डत । ( चीवरादर्जने परिधाने च ) चीवराण्यर्जयति परिधत्ते वा संचीवरयते भिक्षुः ।

## मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ ३ । १ । २१ ॥

मुण्ड मिश्र श्लक्ष्ण लवण व्रत वस्त्र हल कल कृत तूस्त इत्येतेभ्यः करणे णिच् प्रत्ययो भवति । [1]मुण्डं करोति मुण्डयति माणवकम् । मिश्रयत्यन्नम् । श्लक्ष्णयति वस्त्रम् । लवणयति व्यञ्जनम् । ( व्रताद्भोजने तन्निवृत्तौ वा ) पयो व्रतयति, पयोभुङ्क्तेइत्यर्थः । वृषलान्नं व्रतयति, परिहरतीत्यर्थः । सम्वस्त्रयति प्रावरणम् । हलं गृह्णाति । हलयति । एवं कलयतीत्यादि । हलिकल्यो रदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थं परत्वाद्[2]वृद्धौ सत्यामपीष्ठवद्भावेन अणेव लुप्यते । अतः सन्वद्भावदीर्घौ न । अजहलत् । अचकलत् । कृतं गृह्णाति, कृतयति । तूस्तानि विहन्ति, वितूस्तयति । विहननद्योतनाय वेः प्रयोगः । सत्यापपाशेत्यत्रानुवृत्तं करणग्रहणं क्रियाविशेषोपलक्षणम्, अत्र सत्यापेतिनिर्देशेन णिचः सन्नियोगेन सत्यस्यापुक् । टिलोपाभावश्च । तथा च वार्तिकं । [ अर्थवेदसत्याना-

---

[ १ ] अत्र केचित्प्रातिपदिकाद्धात्वर्थइत्येव सिद्धेमुण्डादिसूत्रे केषांचिद्ग्रहणम् सापेक्षेभ्योपि णिजर्थमित्याहुः । अथवा गमकत्वान्मुण्डयति माणवक मित्यत्र णिज्भवति क्यष्तुनागमकत्वादित्यपि तत्र भाष्ये स्पष्टम् ।

[ २ ] नच नित्योलोपः । शब्दान्तरप्राप्त्या तस्याप्यनित्यत्वात् । व्यक्तिभेदमात्रेण च शब्दान्तरस्य ग्रहणात् ।

मापुग्वक्तव्यः ] अर्थापयति । वेदापयति । सत्यापयति । पाशंविमुञ्चति विपाशयति । रूपं पश्यति, रूपयति । वीणयोपगायत्युपवीणयति । तूलेनानुकुष्णाति, अनुतूलयति । तृणाग्रं तूलेनानुघट्टयतीत्यर्थः । श्लोकैरुपस्तौति उपश्लोकयति । सेनयाऽभियाति अभिषेणयति । उपसर्गात्सुनोतीत्यादिना षत्वम् । अभ्यषेणयत् । प्राक्सितादिति षः अभिषिषेणयिषति । स्थादिष्वभ्यासेनेति साभ्यासस्य षत्वम् । लोमान्यनुमार्ष्टि अनुलोमयति । णाविष्ठवदिति टिलोपः । त्वचं गृह्णाति, त्वचयति । अच्प्रत्ययान्तोऽयमकारान्तः । तेनाग्लोपित्वादुपधावृद्धिर्न । हलन्तस्य तु तत्करोतीति णौ त्वाचयति । टिलोपस्तु न प्रकृत्यैकाजिति प्रकृतिवद्भावात् । वर्म्मणा सन्नह्यति सम्वर्म्मयति । वर्णंगृह्णाति वर्णयति । चूर्णैरवध्वंसयति अवचूर्णयति । अत्रावध्वंसनमेव करणमितीन्दुश्रीभट्टौ ।

## ॥ अथान्येभ्योऽपि णिच् प्रदर्श्यते ॥

प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । प्रातिपदिकाद्धात्वर्थे णिच्स्यात्तस्मिं श्चेष्ठनीव बहुलं कार्य्यम् । एनीमाचष्टे एतयति । दरदमाचष्टे दारदयति । पृथुं प्रथयति । वृद्धौसत्यां पूर्वं वा टिलोपः । अपिप्रथत् । अपप्रथत् । मृदुं म्रदयति । अमिम्रदत् । अमम्रदत् । भृशं कृशं दृढम् । भ्रशयति । क्रशयति । द्रढयति । अबभ्रशत् । अचक्रशत् । अदद्रढत् । परिव्रढयति । पर्य्यवव्रढत् । ऊढिमाचष्टे औजिढत् । ढत्वादीनामसिद्धत्वाद्विर्तिशब्दस्य द्वित्वम् । पूर्वत्रासिद्धीयमद्वित्वे इतित्वनित्यमिति । ढि इत्यस्य द्वित्वमित्यन्ये । औडिढत् । ऊढमाख्यत् । औजढत् । औडढत् । प्रकृत्यैकाच् । वृद्धिपुकौ । स्वापयति । त्वां मां वाऽऽचष्टे त्वापयति । मापयति । मपर्य-

[ १ ] लुङ्येषामनभिधानम् ।

[ २ ] वृद्धौ सत्या टिलोपेनाग्लोपित्वात्सन्वद्भावेसति सन्यत इतीत्वम् । वृद्धेःपूर्वं टिलोपे तु अपप्रथदिति ।

न्तस्य त्वमौ[1] । परत्वात्पूर्वं नित्यत्वाट्टिलोपः वृद्धिपुकौ । युवामात्रां वा युष्मयति । अस्मयति । श्वान माचष्टे । शावयति । नस्तद्धित इति टिलोपः । प्रकृतिभावस्तु न । येननाप्राप्तिन्यायेन टेरित्यस्यैव बाधको हि सः । भत्वात्सम्प्रसारणम् । अन्ये तु । नस्तद्धित इति नेहातिदिश्यते । इष्ठनि तस्यादृष्टत्वात् । ब्रह्मिष्ठ इत्यादौ परत्वाट्टेरित्यस्यैव प्रवृत्तेः तेन शुनयतीति रूपमाहुः । श्वानयतीति केचित् । विद्वांसमाचष्टे विदुयति[3] । उदञ्चमाचष्टे उदीचयति[4] । उदैचिचत् । प्रत्यञ्चम् प्रतीचयति । प्रत्यचिचत्[5] । इकोऽसवर्ण इति प्रकृतिभावपक्षे । प्रतिअचिचत् । सम्यञ्चमाचष्टे समीचयति । सम्यचिचत् । समिअचिचत् । तिर्यञ्चमाचष्टे तिरायति[6] । अञ्चेष्टिलोपेनापहारेऽपि बहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः । असिद्धवदत्रेति चिणोलुङ्न्यायेन[7] प्रथमटिलोपोऽसिद्धः । अतः पुनष्टिलोपो न । अङ्गवृत्तपरिभाषया वा । चङ्यग्लोपित्वादुपधाह्रस्वो न । अतितिरायत् । सध्र्यञ्चमाचष्टे सध्रायति । असधायत् । विष्वद्र्यञ्चम् । अविविष्वद्रायत् । देवद्र्यञ्चम् । देवद्रायति । अदिदेवद्रायत् । अदद्र्यञ्चम् । अददद्रायत् ।

---

[ १ ] प्रत्ययोत्तरपदयोश्चेत्यनेन ।

[ २ ] इष्ठवद्भावेन भत्वात्सम्प्रसारणम् । प्रकृत्यैकाजिति प्रकृतिभावः ।

[ ३ ] अङ्गवृत्तपरिभाषया सम्प्रसारणं नेत्येके । सम्प्रसारणे वृद्धावावादेशे च विदावयतीत्यन्ये । नित्यत्वाट्टिलोपात्प्राक् सम्प्रसारणम् । अन्तरङ्गत्वात्पूर्वरूपम् । टि लोपः विदयतीत्यपरे ।

[ ४ ] उपसर्गपृथक्कृत्याच्शब्दादेव णिजिति, प्रकृत्यैकाजितिप्रवृत्तेष्टिलोपो न । उदईत् इतीत्वम् । अनिदितामितिक्विनिमित्तो नलोपः ।

[ ५ ] अचइत्यल्लोपे-चौ-इतिपूर्वस्यदीर्घः ।

[ ६ ] इह धात्वकारस्याचइतिलोपे चिशब्दात्प्रागटि पूर्वस्य यण् । नचालोपस्या सिद्धत्वादाट्स्यादितिवाच्यम् । व्यश्रयत्वात् । णिनिमित्तोहि लोपो लुङ्निमित्तश्चाट् ।

[ ७ ] यथाऽपाचितरामित्यत्र चिणः परस्य तशब्दस्य लुकि पुनस्तरप्रत्ययस्यलुङ् न भवति । प्रथमलुकोऽसिद्धत्वेन व्यवधानात्तथेत्यर्थः ।

अदमुयञ्चम् । अदमु आययति । आददमुआयत् । अमुमुयञ्चम् । अमुमु-आययति । चङ् । आमुमुमुआयत् । भुवं भावयति । अवीभवत् । भ्रुवम् अबुभ्रवत् । श्रियम् अशिश्रयत् । गाम् अजूगवत् । रायम्अरीर-यत् । नावम् अनूनवत् । स्वश्वम् । स्वाशश्वत् । स्वः । अव्ययानां भमात्रे टिलोपः । स्वयति । असिस्वत् । बहून् भावयति । बहयतीत्यन्ये । विन्म-तोरिति लुक् । स्रग्विणम् स्रजयति । संज्ञापूर्वकत्वान्न वृद्धिः । श्रीमतीं श्रीमन्तं वा श्रययति । अशिश्रयत् । पयस्विनीम् । पयसयति । इह टिलोपो न, तदपवादस्य लुकः प्रवृत्तत्वात् । स्थूलम् स्थवयति । दूरम् दवयति । कथं तर्हि दूरयत्यवनते विवस्वतीति । दूरमततिअयतेर्वादूरात् । दूरातं कुर्वतीत्यर्थः । युवानम् यवयति । कनयति । युवाल्पयोरिति वा कन् । अन्तिकं नेदयति । बाढं साधयति । प्रशस्यं प्रशस्ययति । इहश्रज्यौ न, उपसर्गस्य पृथक्कृते । वृद्धं ज्यापयति । वर्षयति । प्रियं प्रापयति । स्थिर स्थापयति । स्फिरं स्फापयति । उरूं वरयति । वारयति । बहुलं बंहयति । गुरुं गरयति । तृपं त्रापयति । दीर्घं द्राघयति । वृन्दारकं वृन्दयति ।

॥ इति नामधातुप्रक्रिया ॥

# * अथ प्रत्ययमालाप्रक्रिया *

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।

सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥१॥ (का०)

शैषिकात् । शालायां भवः शालीयो घटः । शालीये घटे भवमुदक-मत्र पुनश्छो न । विरुपात्तु भवत्येव । यथा अहिच्छत्रे भवआहिच्छत्रः । आहिच्छत्रे भवः आहिच्छत्रीयो माणवकः । मतुवर्थीयात् । दण्डोऽस्यास्तीति दण्डिकः । दण्डिकोऽस्यातीति । अत्रमतुवथष्ठन्न ; विरूपस्तुभवति । यथा । दण्डिमती सेना । सन्नन्तात् । चिकीर्षितुमिच्छति । जिहीर्षितु-मिच्छति अत्र न । स्वार्थसन्नन्तात्तु भवति । यथा । जुगुप्सितुमिच्छति, जुगुप्सिषते । मीमांसिषते । कण्डूयतेः सन् । सन्यङोरितिप्रथमस्यैकाचो द्वित्वे प्राप्ते । ( कण्ड्वादेस्तृतीयस्येतिवाच्यम् ) कण्डूयियिषति । ( वा नाम-धातूनां तृतीयस्यद्वे भवत इति वक्तव्यम् ) क्यजन्तात्सन् । आत्मनोऽश्व-मिच्छति, अश्वीयति । अश्वीयितुमिच्छति अश्वीयियिषति । अशिश्वीयि-षति । अपरआह ( यथेष्टं वा नामधातूनाम् ) आद्यानां त्रयाणामन्यतमस्य द्वित्वमित्यर्थः । अजादेस्त्वाद्येतरस्य । पुत्रीयितुमिच्छति, पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति । अध्यापनीयितुमिच्छति । अदिध्यापनी-यिषति । अध्यापिपनीयिषति । अध्यापनिनीयिषति । अध्यापनीयियि-षति । नदराणां संयुक्तानामचः परस्यैव द्वित्वनिषेधः । आत्मनइन्द्रमिच्छति, इन्द्रीयति, इन्द्रीयितुमिच्छति इन्दिद्रीयिषति । इन्द्रीयियिषति । प्रियमा-ख्यातुमाचक्षाणंमेरयितुं वेच्छति । पिप्रापयिषति । प्रापिपयिषति ।

---

[ १ ] णाविष्टवद्भावेनप्रियशब्दस्य-प्रियस्थिर-इत्यादिना-प्रादेशस्ततो द्वित्वादिः ।

मापयियिषति । उरुं विवारयिषति । वारिरयिषति । वारयियिषति । वाढमाचष्टे साधयति । साधयितुमिच्छति । सिसाधयिषति[1] । सादिधयिषति । साधयियिषति । अतिशयेन पुनः पुनर्वा भवति बोभूयते । बोभूयितुमिच्छति, बोभूयिषते । बोभूयिषमाचष्टे, बोभूयिषयति । बोभूयिषयितुमिच्छति, बोभूयिषयिषति । गोमन्तमाचष्टे, गवयति । आत्मनो गवयमिच्छति, गवयीयति । गवयीयितुमिच्छति । गविवयीयिषति । पाचकीयितुमिच्छति, पिपाचकीयिषति । आख्यातमाचष्टे, आख्यातयति, आख्यातयितुमिच्छति, आचिख्यातयिषतीत्यादि ।

## ॥ इति प्रत्ययमाला प्रक्रिया ॥

[ १ ] इष्ठवद्भावादिह–अन्तिकबाढयोरितिसाधादेशः ।

# अनिट्धातवः

अनिट् स्वरान्तो भवतीति दृश्यता-
मिमाँस्तु सेटः प्रवदन्ति तद्विदः ।
अदन्त मृदन्त मृतां च वृङ्वृञौ
श्विडीङिवर्णेष्वथ शीङ्श्रियावपि ॥
गणस्थ मूदन्त मुतां च रुस्नुवौ
क्षुवन्तथोर्णोतिमथो युणुक्ष्णवः ।
इतिस्वरान्ता निपुणं समुच्चिता-
स्ततो हलन्तानपि सन्निबोधत ॥

द्वये एव धातवः स्वरान्ता व्यञ्जनान्ताश्च, तत्र सर्वे स्वरान्ता एकाचो-नुदात्ता अदन्तादीन् वर्जयित्वा । दाता । नेता । चेता । स्तोता । कर्त्ता । हर्त्ता । अदन्तादय उदात्ताः । अवधिष्ट । ऋदन्तम् । तरिता । ऋतां च वृङ् वृञौ । निर्वरिता । निर्वरीता । प्रवरिता । प्रवरीता । श्विडीङिवर्णेष्वथ शीङ्श्रियावपि । श्वयिता । उड्डयिता । शयिता । श्रयिता । गणस्थमूदन्तम् । लविता । पविता । उतां च रुस्नुवौ क्षुवन्तथोर्णोतिमथो युणुक्ष्णवः । रविता । प्रस्नविता । क्षविता । प्रोर्णविता । वाच्य ऊर्णोर्णुवद्भावो यङ् प्रसिद्धिः प्रयोजन मित्यतिदेशादेकाचूत्वमूर्णोतेरस्तीति उदात्त उपदिश्यते । यविता । नविता । क्ष्णविता ।

इति स्वरान्ता निपुणं समुच्चिता-
स्ततो हलन्तानपि सन्निबोधत ।

शकिस्तु कान्तेष्वनिडेक इष्यते
घसिश्च सान्तेषु वसिः प्रसारणी ॥

घसिः प्रकृत्यन्तरमस्ति । घस्ता । वसिः प्रसारिणी । वस्ता । प्रसारणीतिकिम् । वसिता वस्त्राणाम् । 'वस निवासे' इत्यस्य यजादित्वात् सम्प्रसारणं विहितं, न तु 'वस आच्छादने' इत्यस्य ।

रभिस्तु भान्तेष्वथ मैथुने यभि-
स्ततस्तृतीयो लभिरेव नेतरे ॥

आरब्धा । यब्धा । लब्धा ।

यमिर्यमन्तेष्वनिडेक इष्यते
रमिश्च यश्च श्यनि पठ्यते मनिः ।
नमिश्चतुर्थो हनिरेव पञ्चमो
गमिश्च षष्ठः प्रतिषेधवाचिनाम् ॥

यन्ता । रन्ता । तन्ता । मन्ता । श्यनीति किम् । मनुतेर्मनितेत्येव भवति । नन्ता । हन्ता । गन्ता ।

दिहिर्दुहिर्मेहतिरोहती वहि-
र्नहिस्तु षष्ठो दहतिस्तथा लिहिः ।
इमेऽनिटोऽष्टाविह मुक्तसंशया
गणेषु हान्ताः प्रविभज्य कीर्त्तिताः ॥

देग्धा । दोग्धा । मेढा । रोढा । वोढा । नद्धा । दग्धा । लेढा । मुक्तसंशया इतिकिम् । तत्रान्तरे चत्वारोऽपरे पठ्यन्ते । सहिमुहिरिहिलुहयः । तत्र सहेरिड्विकल्पस्तकारादौ । मुहिरपि रधादौ । तेन तौ ससंशयौ

सविकल्पौ । इतरौ तु धातुषु न पठ्येते । कैश्चिदभ्युपगम्येते इति स्वरूपेणैव ससंशयौ ।

दिशिं दृशिं दंशिमथो मृशिं स्पृशिं
रिशिं रुशिं क्रोशतिमष्टमं विशिम् ।
लिशं च शान्ताननिटः पुराणगाः
पठन्ति पाठेषु दशैव नेतरान् ।

देष्टा । द्रष्टा । दंष्टा । आम्रष्टा । आमर्ष्टा । स्प्रष्टा । स्पर्ष्टा । ऋदुपधानामुदात्तोपदेशानां सृजिदृशी वर्जयित्वा अनुदात्तस्य चर्दुपधस्यान्यतरस्यामिति रमागमविकल्पः । रेष्टा । रोष्टा । क्रोष्टा । प्रवेष्टा लेष्टा ।

रुधिः सराधि र्युधिर्बन्धिसाधयः
क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिः ।
इमे तु धान्ता दश ये ऽनिटो मता-
स्ततः परं सिद्ध्यतिरेव नेतरे ॥

रोद्धा । राद्धा । योद्धा । बद्धा । साद्धा । क्रोद्धा । क्षोद्धा । शोद्धा । बोद्धा । व्यद्धा । सेद्धा । बुद्धयतिसिद्धयत्योः श्यनानिर्देशादन्यविकरणयोर्बुद्धिसिद्ध्योरिड् भवत्येव । बोधिता । सेधिता । निष्ठायामपि प्रतिषेधाभावाद्, बुधितं सिधितमित्येव भवति ।

शिषिं पिषिं शुष्यतिपुष्यती त्विषिं
विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम् ।
इमान् दशैवोपदिशन्त्यनिड्विधौ
गणेषु षान्तान् कृषिकर्षती तथा ॥

शेष्टा । पेष्टा । शोष्टा । पोष्टा । त्वेष्टा । वेष्टा । श्लेष्टा । तोष्टा । दोष्टा । द्रेष्टा । आक्रष्टा । आकर्ष्टा । कृषेस्तौदादिकस्य भौवादिकस्य कृषि-कर्षती इति निर्देशः ।

तपिं तिपिं चापिमथो वपिं स्वपिं
लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ।
स्वरेण नीचेन शपिं छुपिं क्षिपिं
प्रतीहि पान्तान् पठिताँ स्त्रयोदश ॥

तप्ता । तेप्ता । आप्ता । वप्ता । स्वप्ता । लेप्ता । लोप्ता । तृप्यति-दृप्यत्योरनुदात्तत्वममागमार्थमेव । इट् च तयो रुधादिपाठाद्विकल्पेन भवति । त्रप्ता । तर्प्ता । तर्पिता । द्रप्ता । दर्प्ता । दर्पिता । तुदादिषु तु यौ तृपिदृपी तावुदात्तावेव । स्रप्ता । सर्प्ता । शप्ता । छोप्ता । क्षेप्ता ।

अदिं हदिं स्कन्दिभिदिच्छिदिक्षुधीन् ८
शदिं सदिं स्विद्यतिपद्यती खिदिम् ।
तुदिं नुदिं विद्यति विन्त इत्यपि
प्रतीहि दान्तान् दश पञ्च चानिटः ॥

अत्ता । हत्ता । स्कन्ता । भेत्ता । छेत्ता । क्षोत्ता । शत्ता । सत्ता । स्वेत्ता । स्विद्यतीति श्यना निर्देशो ञिष्विदा इत्यस्य निवृत्त्यर्थः । उदात्त एवायम् । पत्ता । खेत्ता । तोत्ता । नोत्ता । वेत्ता । विद्यति विन्त इत्यपि श्यना श्नमा च निर्देशोन्यविकरणनिवृत्त्यर्थः । वेत्तिविन्दती उदात्तावेव । वेदिता विद्यानाम् । वेदिता धनस्य ।

पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्
निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ।

त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन्
भुजिं स्वजिं सृजिमृजी विद्ध्यनिट्स्वरान् ॥

पक्ता । वक्ता । विवेक्ता । रेक्ता । रङ्क्ता । भ्रष्टा । निर्णेक्ता । सेक्ता । मोक्ता । भक्ता । भङ्क्ता । भ्रष्टा भर्ष्टा । त्यक्ता । यष्टा । योक्ता । रोक्ता । सङ्क्ता । मङ्क्ता । भोक्ता । परिष्वक्ता । स्रष्टा । मार्ष्टा । मृजिरयमूदित् पठ्यते । ततोऽस्य विकल्पेनेटा भवितव्यम् । मार्ष्टा, मर्जिता इति । अमागमो ऽप्यस्य न दृश्यते । तदस्यपाठस्य प्रयोजनं चिन्त्यम् । केचिदस्य स्थाने विजिं पठन्ति । सृजिं विजिं विद्ध्यनिट्-स्वरानिति । निजादिषु यो विजिरसावनिडिष्यते । तथा च ग्रन्थान्तरं, निजिविजिष्वञ्जिवर्जमित्युक्तम् ।

अन्यत्रापि विशेष निर्देश प्रयोजनमुक्तम् । तथाहि ।
अनुदात्ता हलन्तेषु, धातवो द्व्यधिकं शतम् ।
तुदादौ मतभेदेन स्थितौ यौच चुरादिषु
तृप् दृपी, तौ वारयितुं श्यनानिर्देश आदृतः ॥
किञ्च ।
स्विद्य-पद्यौ, सिध्य बुध्यौ, मन्य-पुष्य-श्लिषः श्यना ॥
वसिः शपा लुका यौतिर्निदिष्टोऽन्यनिवृत्तये ॥
णिजिर् विजिर् शक्लृ इति सानुबन्धा अमी तथा ॥
विन्दतिश्चान्द्रदौर्गादेरिष्टं भाष्येऽपि दृश्यते ॥
व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ॥
रञ्जिमस्जी, अदिपदी, तुद, क्षुध्, शुषि पुषी शिषिः ॥
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसम्मतेः ॥

# शुद्ध्यशुद्धीपत्रम्

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ५ | ल | ल् |
| ४ | ७ | कथमे | कथने |
| ५ | १६ | यालतुरुस् | यालतुसुस् |
| ८ | २१ | प्रत्यस्य | प्रत्ययस्य |
| १४ | ८ | चिलः | च्लिः |
| १४ | १७ | स्थनिवद्व | स्थानिवद्व |
| १५ | ५ | सिच | सिचः |
| १५ | ११ | च्यो | च्यो |
| १७ | ५ | य । स् | यास् |
| १८ | ७ | क्ङि | क्ङि |
| १८ | १९ | य । त्म | यात्म |
| २० | ३ | व | व |
| २० | १८ | लोट् इत्येव | लोट इत्येव |
| २० | २० | लोट् इत्येव | लोट इत्येव |
| २१ | १२ | ङ | ङा |
| २१ | १५ | ङ | ङा |
| २२ | १८ | ष्ठ | ष्ठ |
| २३ | ८ | ग | गु |
| २३ | १८ | रू | रु |
| २३ | १९ | दो | दर्ी |
| २४ | ३ | च्च | चः |
| २४ | ७ | त्ने | त्ने |
| २४ | १५ | पे | प |
| २४ | १९ | र्ज | र्जु |
| २५ | २२ | त्य | प्य |
| २८ | २ | हि | र्हि |
| ३१ | ६ | ना | श्रा |
| ३१ | ८ | श्रु | श्रु |
| ३१ | १० | र्मय | मर्य |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३४ | १३ | व | व |
| ३४ | १८ | अजिष्यत् | आजिष्यत् |
| ३४ | २० | न्न | ज्ञ |
| ३५ | २ | किङ् | क्ङि |
| ३६ | ३ | ह | हृ |
| ३७ | ७ | त्रिं | स्त्रिं |
| ३७ | १४ | प् | पू |
| ३७ | १७ | किङ् | क्ङि |
| ३७ | १९ | वि | वि |
| ३८ | ६ | ष्ट | छ |
|  | ९ | तो | तौ |
|  | १३ | न्ना | ना |
| ३९ | ३ | द्व | द्वे |
|  | १३ | चुपति | चोपति |
|  | १४ | तुक | तुफ |
|  |  | हि | र्हि |
| ४० | ३ | धुत्वम् | ष्टुत्वम् |
|  | ५ | घु | घो |
|  | ८ | नपे | नेप |
|  | २० | यभूव | बभूव |
|  | २२ | कामयेत । | अकामयत । |
|  |  | अकामयत । | कामयेत |
| ४२ | १२ | वे | बे |
|  | १६ | भ्रवात | भवति |
|  | १८ | हम्य | हृम्य |
|  | २२ | कान्तितमत्र | कान्तिमतीत्यत्र |
| ४३ | ११ | स्तु | त्स्तु |
| ४४ | ८ | निर | निर् |
| ४६ | ६ | च्छ | र्च्छ |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४७ | २३ | त्या | त्य |
| ४८ | ११ | वभूव | बभूव |
| ४९ | ८ | अचाद्याः | अगाद्याः |
| | १० | धेग | धेन |
| ५० | १ | घं | घुं |
| | १६ | तनु | तनू |
| | १९ | णिा | णिच |
| ५१ | १७ | प्रभु | प्रभु |
| | २१ | त्स | र्त्स |
| | २२ | स्यावर्णे | स्यासवर्णे |
| | २४ | दे | दै |
| ५२ | १० | तु | तुः |
| ५३ | १ | बृहर | बृहिर् |
| | १८ | मिनदे | मिमिदे |
| ५४ | १७ | ष्ठ | ष्ठ |
| | २२ | न्ना | न्न |
| ५५ | १२ | त्पस्य | त्प्स्य |
| | २२ | हि | हिं |
| | २३ | धं | धुं |
| ५६ | २ | वै | वै |
| | | त्व | त्य |
| | ९ | ह | ह्र |
| | २१ | ह्व | ह्न |
| | २४ | चक्षुष | चाक्षुषे |
| ५७ | १६ | णतुः | णुः |
| | १७ | त्य | त्या |
| ५९ | १ | दाते | दात्ते |
| | १८ | यः | तः |
| | २१ | ष | य |
| ६० | १ | रर | र |
| | १६ | त्रि | त्रिं |
| ६१ | ८ | अन्यात् | खन्यात् |
| | १३ | शा | दा |
| ६२ | ६ | ऽभ | ग्भ |
| ६४ | १५ | सिं | सि |
| | २२ | ध्या | धा |
| | | घा | धा |
| ६५ | १५ | ह | ह् |
| ६६ | ९ | नित्यमिट् | नित्यमिट्, स्वरिष्यति । |
| | १० | वृ | हृ |
| | १३ | ह्वा | ह्वा |
| ६७ | २० | द | दु |
| ६८ | ८ | ङ | ङ् |
| | १४ | विनियः | विनिमयः |
| ७० | १५ | त | तो |
| ७१ | २३ | णण | ण |
| ७१ | १८ | पु | ष |
| ७२ | ६ | र्च | र्घ |
| ७३ | २२ | धम | धर्म |
| ७४ | ९ | णम् । | णं |
| ७५ | ९ | चा | ज्ञा |
| ७७ | २ | प्य | ध्य |
| ७७ | २ | ह्वयोः | ह्वयोः |
| ७७ | ९ | येत | यते |
| ७७ | १० | । चङ् | चङ् |
| ७८ | ८ | तृ | त |
| ७९ | १४ | क्ङि | क्ङि |
| ८० | ५ | अ | आ |
| | १८ | ट्ढि | ड्ढि |
| ८१ | ४ | ध्वधं | ध्वंव |
| ८१ | ९ | युर्जयः | युजर्यः |
| ८२ | १ | भ्य | भ्यः |
| | २१ | ड्ढ्वे | ड्ढ्वें |
| ८४ | ८ | र्ट | ट |
| | २२ | णु | र्णु |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८५ | ३ | उ | ऊ |
| | | ऊर्णुनविषे | × |
| | १३ | द्योति | द्यौति |
| ८६ | ३ | भ्रू | भ्रू |
| ८७ | २ | ह | ह्र |
| | १९ | सट् | सुट् |
| ८८ | २३ | त्र | त्रे |
| ८९ | ३ | अदाने | आदाने |
| | ११ | ष | प |
| | २३ | त्रि | ति |
| ९० | ६ | रू | रु |
| | १६ | भ्य | भ्या |
| ९१ | १८ | स्म | स्य |
| | २० | षा | ष |
| ९२ | १ | ड | ड् |
| | २ | रू | रु |
| | ३ | र्य | र्य्य |
| | ७ | ओ | अरो |
| | ८ | ष | प |
| ९४ | ८ | द्र | द्रि |
| | १८ | म | मा |
| | २१ | त्तं | सं |
| ९५ | १० | सति | सर्ति |
| | १६ | आ | अ |
| ९६ | ७ | सस्त्यात् | संस्त्यात् |
| ९७ | ३ | स्वा | स्व |
| | ४ | ह्लः | ह्लुः |
| | १२ | हृ | ह |
| ९८ | ४ | ही | ह्री |
| ९९ | ३ | पिप्रि | पिपॄ |
| | १० | अभरि | अभरिष्यत |
| १०० | १४ | वशो | बशो |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०१ | ९ | ष्ट | ष्टु |
| | १२ | म्रोः | म्राः |
| १०२ | ८ | व | ब |
| १०४ | १० | नि | मि |
| १०५ | १२ | हम्य | ह्म्य |
| १०६ | ५ | ग्य | ग्यु |
| | ७ | मीनो | मिनो |
| १०८ | ३ | ह्वि | ह्विः |
| | १२ | त्ते | ते |
| | १४ | ग्रृ | गृ |
| | २४ | ण | ण् |
| १०९ | १२ | वु | बु |
| | २३ | घृ | दृ |
| ११० | १९ | श्लेः | श्च्लेः |
| १११ | ५ | से | षे |
| ११२ | ६ | श्ये | ष्ये |
| | ८ | व | व्र |
| | १२ | हुम | हमु |
| ११६ | ६ | सुनुतः । सुनोति । | सुनुतः । |
| | ७ | सुनोति । वा । | वा । |
| ११७ | ५ | रतृ | स्तृ |
| | १६ | या | था |
| | | मव | व |
| ११८ | ३ | ष्यत् । | ष्यत । |
| | ५ | धुविथ | धविथ |
| ११९ | १६ | भ्भो | म्भो |
| | २१ | त्व | स्व |
| १२१ | ५ | त्तां | त्ता |
| १२३ | १८ | म्फ्या | फ्या |
| | २१ | त्त | त्त |
| | २३ | म्पादो | म्फादी |
| | २५ | त्य | स्य |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२४ | ११ | पुो | पो |
| | १७ | त्प | सं |
| | १९ | ब | व |
| | २१ | वृ | षृ |
| | | स्तृहू, तृहू | स्तृहू, तृंहू |
| १२५ | १ | तृ | तृं |
| | ११ | चुकोट | चुकुट |
| | १२ | चुकुट | चुकोट |
| | | कुडिता। | अजणित्वे |
| | | कुटिष्यति। ऽङित्वाद् | |
| | | अजणित्वे गुणः। | |
| | | ऽङित्वाद् | कुटिता। |
| | | गुणः। | कुटिष्यति। |
| | १३ | स्फूल | स्फुल |
| १२६ | ४ | म्र | घ्र |
| | ११ | द्रु | दु |
| | १४ | म्रा | म्राः |
| | | र्वं | र्वंः |
| | १९ | ङो | ङोः |
| १२७ | १० | सू | सु |
| | १३ | ट | ट |
| | १४ | ग | गॄ |
| | १९ | ऽ | ऽऽ |
| १२८ | १ | म्न | ग्र |
| | ८ | स्रा | स्र |
| | | दु | दु |
| | १६ | स्य | स्प |
| | | त्म्प | त्म्प्र |
| १२९ | ८ | श्चे | श्वे |
| | १२ | चिचि | चि |
| १३० | ४ | धिट | धिट् |
| | ७ | न्ध | न्धः |
| | ८ | द्ध | द्धु |
| | १२ | ढ्रिरि | छिदि |
| | १३ | क्त | क्ति |
| | १७ | ब | ब्रु |
| | १८ | दि | द |
| | १९ | च्छ | च्छृ |
| १३१ | २ | दि | र्दि |
| | ३ | दिट | दिट् |
| | | छ्र | छृ |
| | ९ | इाध | इधि |
| | | इन्धै | इनधै |
| | १३ | खादावदी | खिदिविदी |
| | १६ | न | त् |
| | २१ | हि | हिं |
| | २३ | त्वा | त्वा |
| १३२ | ३ | ठ् | ट् |
| | ९ | ङ्धि | ङ्गिध |
| | ११ | त्र | त्र् |
| | १६ | र्कें | र्कें |
| | १७ | ष | प |
| | १९ | म्बि | म्त्रि |
| १३३ | ४ | त्यो | त्ययो |
| | ६ | न् | न |
| | ७ | तु | नु |
| | १० | बि | वि |
| | ११ | त्मा | त्मा त्मा |
| | १३ | त्वम्बा | त्वं वा |
| | १४ | ह्र | ह्र |
| | १६ | ह्मय | ह्मय |
| | | ह्ने | ह्न |
| | १७ | तो | चो |
| | १९ | ब | व |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३४ | ३ | य । उ | य उ |
| | ४ | ब | व |
| १३४ | ५ | बो | वो |
| | | ब | यं |
| | ६ | वो | बो |
| १३५ | २ | लि | लो |
| | ३ | तति | ति |
| | | कात | कात् |
| | ५ | ये | यें |
| | ७ | सपर्युये | संपर्युपे |
| | ८ | परिभ्यां | पर्युपेभ्यः |
| | १० | ड़ | ड् |
| | ११ | दिइ | दि |
| | १२ | तेः | तोः |
| | १४ | मतिनु | मानेषु |
| | • | ते | त |
| | १५ | ती | तो |
| | | मर्धि | आधि |
| | | कृद | वृद्ध |
| | | वेस्था | वस्थया |
| | २१ | त्या | च्या |
| १३६ | ४ | भा | मा |
| | १३ | मू | म् |
| १३६ | १३ | व | ब |
| | १५ | स्मु | म्भु |
| १३७ | ३ | भ्वि | म्भिव |
| | १३ | व | ब |
| | १९ | त्यत | त्यतः |
| १३८ | ७ | रा | र |
| | १५ | त्वे | त्वे |
| | | अयु | अयु |
| | | कितिति | कितीति |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | २० | हि | हिं |
| | २२ | याया | या |
| | २३ | र्पात् | र्पात् |
| १३९ | २ | संम्प्रा | सम्प्र |
| | ६ | त्वं | त्वं |
| | ९ | च्या | च्या |
| | ११ | वो | बो |
| | १२ | त्प्र | त्प्र |
| | १५ | व | ब |
| | १६ | व | ब |
| | १७ | ध्नी | ध्नी |
| | १९ | वा | बा |
| | २० | धृङ् | वृङ् |
| | २३ | ष्टो | ष्टा |
| १४० | ७ | ग्रन्य | ग्रन्थ |
| | ८ | सज्ञे | संज्ञे |
| | १६ | स | सु |
| | १७ | हि | हिं |
| | १८ | बत् | वत् |
| | २३ | मूय | मूया |
| १४१ | १० | क्षौ | क्षौ |
| | १३ | बिं | विं |
| | १६ | म्प | म्प्र |
| | १७ | तोदा | तौदा |
| | १८ | व्यतो | व्यती |
| | २० | र्य | र्यः |
| १४२ | २ | गृह्णाण | गृहाण |
| | | ह्णीत् | ह्णीत |
| | ५ | क्षया | क्ष्या |
| १४३ | ६ | शवादि | शबादि |
| | ९ | दिपाये | भिप्राये |
| १४३ | १२ | हृस्वः | ह्रस्वः |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | १५ | त्वा | त्वा |
| १४४ | ७ | ज, । इ | ज, इ |
| | १० | मास | भाष |
| | | मील् | मील |
| | १२ | नटयति | नाटयति |
| | १७ | त्वा | त्वा |
| | | घटा | घाटा |
| | १९ | त्ये | त्य |
| | २० | त्वा | त्वा |
| | २२ | र्घा | र्घो |
| | २३ | ज | ज् |
| | | त्यं | त्ये |
| १४५ | ३ | अर्षपृषत | अपीपृषत् |
| | ६ | पुष्ट | पुष्ट |
| | १२ | पेसययति | पेसयति |
| | १७ | पिच्छपति | पिच्छयति |
| | १८ | सम्बरणे | संवरणे |
| १४६ | ५ | मण्डयतु | × |
| | ६ | मण्डयात् | मण्ड्यात् |
| | ७ | बमने | वमने |
| | १५ | शुल्त्रयति | शुल्त्रयति |
| | | अशुशुल्कत् | अशुशुल्वत् |
| १४७ | ४ | व | ब |
| | ६ | ओ | आ |
| | ८ | ह्री | ह्री |
| | १० | ज | च |
| | १९ | चिकी | चीकि |
| | २० | वो | वौ |
| १४८ | ७ | काइ | कारस्य |
| | ८ | वर्द्धं | वर्द्धं |
| | १७ | म्ब | म्ब |
| | | ह्रा | ह्रा |
| | १३ | हि | हिं |
| | | व | व |
| | १९ | पत | पत् |
| १४९ | २ | गे | से |
| | ६ | व | ब |
| | ७ | इक | ष्क |
| | | ष्क | ष्क |
| | ८ | लयत् | ललत |
| | १२ | त्व | त्व |
| | १३ | घु | त्रु |
| | १५ | चुकुठ | चूकुट |
| | १६ | व | ब |
| १५० | १ | यो | यो |
| | ४ | व | च |
| | १२ | बु | बु |
| १५० | १३ | षिर | षिर् |
| | १५ | त्वा | त्वा |
| | | च | घु |
| १५१ | २ | यत्ये | तत्ये |
| | ८ | बं | बं |
| | | भृ | शृ |
| | | वो | बो |
| | ९ | मर्गे | सर्गे |
| | १२ | मु | मु |
| १५१ | २२ | क | क |
| १५२ | ४ | ह्ढ | ह्ढ |
| | ५ | ब | व |
| | ६ | वि | वि |
| | ९ | त्वा | त्वा |
| | १८ | यपि | यति |
| | २१ | लोलोः | लीलोः |
| १५३ | २ | वों | वौं |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | ७ | चू | च् |
| | ९ | रो | से |
| | १४ | त्वा | श्वा |
| | १८ | ष्ठा | ष्टा |
| | २० | हि | हिं |
| | २३ | न्य | न्थ |
| १५४ | १ | यित | यति |
| | २ | ब | ब |
| | ८ | ड | ड् |
| | ९ | र्ष | र्ष |
| | ११ | वः | बः |
| | १३ | ब | व |
| | १६ | ब | व |
| | | ञ्जु | ञ्जु |
| | २० | बा | वा |
| १५५ | ४ | व | ब |
| | ९ | ब | व |
| | १० | त्वा | स्वा |
| | | बे | वे |
| | १२ | यन | न |
| | १३ | ब | व |
| | १५ | बा | वा |
| | २० | तो | ती |
| | २२ | तो | ती |
| १५६ | ३ | थी | यी |
| | ९ | गव | मर्व |
| | १० | दत् | दत |
| | १३ | ज्ञा | ज्ञा |
| | २० | स्मि | स्मिं |
| | २१ | क्रा | क्रा |
| | २३ | त्वा | त्वा |
| १५७ | ३ | थ | र्थ |
| | ६ | च् प | च् प्र |
| | १० | ब | थ |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | १२ | यि | त्रि |
| | १६ | र्षं | र्षं |
| | १७ | अँ | अं |
| | | बि | वि |
| १५८ | ४ | दु | दुः |
| | ६ | रू | रू |
| | ९ | व | ब्र |
| | ११ | ना | जा |
| | १२ | न | नं |
| | १३ | बि | त्रि |
| | १७ | प | प्र |
| | १७ | या | याः |
| १५९ | १९ | तें | न्ते |
| १६० | २ | षड | षड् |
| | ११ | टय | ट्य |
| | १५ | शुभ् | शुभ |
| | १९ | त्वे | त्वे |
| | २० | सो | सी |
| | २१ | दम् | दम् |
| १६१ | १ | ज | ज् |
| | ११ | तिर | तिरस् |
| | | रम् | रस् |
| | | यम् | यस् |
| | १७ | हो | ही |
| | | तो | ती |
| १६२ | २ | प् | प |
| | ७ | बा | वा |
| | १४ | त्या | त्या |
| | १६ | तो | ती |
| १६३ | ७ | च | च् |
| | १७ | द्वँ | द्व |
| | १८ | दौकिम् | दौ किम् |
| १६३ | २१ | य | यः |
| १६४ | १० | प | ष |
| | २१ | दो | दी |

# आख्यातिकस्थधातूनां सूची ।

इति पण्डितवेदप्रकाशवेदालंकारकृत-

माख्यातिकस्थधातूनां

सूचीपत्रम्